श्रीवेङ्कटेश्वरप्राच्यविमर्शक ग्रन्थावली—सं. २

सम्पादकः—परवस्तु वेङ्कटरामानुजस्वामी, एम्, ए.




# रूपकपरिशुद्धिः

श्रीवेङ्कटेश्वर आङ्गलकलाशाला प्रधान संस्कृताध्यापकेन
मीमांसार्णव मीमांसाकेसरि पूर्वोत्तरतन्त्रप्रदीप पण्डितराज
देशिक तिरुमलै ताताचार्य शिरोमणिना (M. O. L.)
विरचिता


१९४६
तिरुपति
तिरुमलै-तिरुपति-देवस्थानमुद्रणालये
मुद्रिता


मूल्यम् रू. २—०—०

SRI VENKATESVARA ORIENTAL INSTITUTE STUDIES No. 2

EDITOR :—P. V. RAMANUJASWAMI, M.A.

# RUPAKAPARISUDDHI

(A STUDY IN THE FIGURES RUPAKA AND UPAMA)




BY

Paṇḍitarāja D. T. TATACHARYA, M.O.L.,
*Curator, Sri Venkatesvara Oriental Institute, Tirupati*
*(now Lecturer in Sanskrit, Sri Venkatesvara College.)*




TIRUPATI
TIRUMALAI-TIRUPATI DEVASTHANAMS PRESS
1946

[Price Rs. 2/-

ङ्कटेश्वरप्राच्यविमर्शक ग्रन्थावली—सं. २
दकः—परवस्तु वेङ्कटरामानुजस्वामी, एम्. ए.




# रूपकपरिशुद्धिः

श्रीवेङ्कटेश्वर आङ्गलकलाशाला प्रधान संस्कृताध्यापकेन
मीमांसार्णव मीमांसाकेसरि पूर्वोत्तरतन्त्रप्रदीप पण्डितराज
देशिक तिरुमलै ताताचार्य शिरोमणिना (M. O. L.)
विरचिता

१९४६
तिरुपति
तिरुमलै-तिरुपति-देवस्थानमुद्रणालये
मुद्रिता

मूल्यम् रू. २—०—०

# विषयसूची ।

# INTRODUCTION

The thesis of the *Rūpakaparisuddhi* is the same as that of my paper on "Pada-pankajam—Rūpaka or Upamā also" published in the Journal of Sri Venkatesvara Oriental Institute, Vol. III, No. I (Jan—June 1942). It is here dealt with in greater detail. Reference is also made to very many connected points and topics discussed in works such as the *Alankārasarvasva* of Ruyyaka, the *Chitramīmāmsā* and the *Vṛttivārtika* of Appayya Dikshita and the *Rasagangādhara* of Jagannātha.

Of all the figures of speech—*Alankāras*—dealt with by the Sanskrit Poeticians, *Upamā* is, as everybody knows, the first and most important. The majority of the other important *Alankāras* are but different forms of the same *Upamā*. *Rūpaka* is one of these derevative or evolved *alankāras* and its importance as an *Alankāra* is only next to that of *Upamā*. The process involved in changing *Upamā* into *Rūpaka* is very simple. We have only to drop the particle *iva* or the word signifying likeness or similarity and it becomes *Rūpaka*. 'The face is like the moon' is *Upamā*. But 'The face is the moon' is *Rūpaka*. *Luptomā* is the name given to this by Yāska. Among the very many *Alankāras* these two alone have claimed fuller and more serious consideration than any others at the hands of Poeticians.

The term *sāmānyāprayoge* used in Panini's *Sūtra* 2-1-56. has been the chief difficulty confronting the *Ālankārikas*. According to Patañjali and Kaiyaṭa this term is superfluous in the *Sūtra* and consequently it puts no restriction to the application or the scope of the *Sūtra*. This point has, however, been some how missed by the Ālankārikas, with the result that the very purpose of the *Sūtra* was throughly misunderstood and there arose a lot of confusion with regard to *Upamā* and *Rūpaka*. These Ālankārikas, when considering and answering several ingenious questions concerning the two *Alankāras*, have arrived at certain conclusions which appear hardly acceptable.

As already stated 'The face is the moon' is *Rūpaka*. But 'the moon'—indicating the face by its secondary significance—is *Atiśayokti*. This is accepted on all hands including Appayya Dikshita *as* may be seen from his *Kuvalayānanda* and *Chitramimāṁsā*. But a certain line of argument he has taken up in his *Vṛttivārtika* led him to declare the converse: 'The face is the moon' may be *Atiśayokti* and 'The moon' (in the sense of face) may be *Rūpaka*.

Bhojarāja, the author of the *Sarasvatīkaṇṭhābharaṇa*, stands unequalled in his capacity to understand and interpret ancient works and authors. '*Sāmānyāprayoge*' in Panini's *Sūtra*, which Patañjali himself could not satisfactorily explain, found its true significance and value in the *Sūtra* at the hands of the ingenious Bhoja, a fact which is yet to receive the attention it deserves at the hands of scholars. On the strength of the support given by Bhoja, I have been bold enough to criticise the views of many a preeminent author on *Alaṅkāra*.

In conclusion it is my pleasant duty to thank Sri P. V. Ramanujaswami, M.A., Director, Sri Venkatesvara Research Institute, Tirupati, for inclusion of this work of mine in the series of Sri Venkatesvara Oriental Studies.

2—3—46. Tirupati.

D. T. TATACHARYA




श्रीः

# रूपकपरिशुद्धिः



वाचामभूमिर्मनसोऽपि यत्त-
दाम्नातमाम्नायशिरस्सु धाम ।
षण्णातटीशेखरतामुपेतं
कुलस्य नस्तद् धनमानतोऽस्मि ॥

पादारविन्दमिति रूपकमेतदाहुः
प्रायेण सर्व इह कोऽपि न संशयोऽस्ति ।
तत्रोपमाऽपि भवितुं क्वचिदर्हतीति
यत्त्वाहुरत्र न समञ्जसतां प्रतीमः ॥

तदिदमुपपादयन्ती रूपकपरिशुद्धिरवतरत्येषा ।
सहृदयहृदयाराधनजनितमहानन्दलाभकौतुकिनी ॥

उपक्रमः

अत्र पदपङ्कजमित्यादिर्विषयः । किमत्र रूपकमेव आहोस्वित् क्वचिदुपमाऽपि भवितुमर्हतीति संशयः । क्वचिदुपमाऽपि भवतीति पूर्वः पक्षः । न क्वचिदुपमा । सर्वत्रापि तु रूपकमेवेति सिद्धान्तः । इदं तावदनन्तराभ्यां पद्याभ्यां व्यक्तम् ।

फलमस्य विचारस्य ग्रन्थान्ते दर्शयिष्यते ।
श्रुतप्रकाशिकाग्रन्थपङ्क्त्यर्थावगमात्मकम् ॥

पूर्वः पक्षः

तत्र पूर्वपक्षिणामयमभिप्रायः ।

मुच्यन्ते कमलाक्षस्य पदपङ्कजमाश्रिताः ।

इत्यादौ मुक्तिसाधनीभूतसमाश्रयणकर्मत्वेन निर्दिश्यमाने पदपङ्कजे पदस्य प्राधान्यं वाच्यं न पङ्कजस्य । तेनात्र पदं पङ्कजमिवेत्ययं समास आश्रयणीयः । ' उपमितं

व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनेन सूत्रेण विहितेऽस्मिन् समासे उपमैव वाच्या; न रूपकस्य प्रसङ्गोऽस्तीति स्फुटमेतत् ।

पदपङ्कजमम्ब तावकं सुरनारीकबरीविभूषणम् ।

इत्यादौ पुनः कबरीविभूषणभावौचित्यं पङ्कजस्यैव न पदस्येति पङ्कजस्यैव प्राधान्यस्य वाच्यतया पदमेव पङ्कजमिति समासान्तरमाश्रयणीयम् । 'विशेषणं विशेष्येण बहुलम्' इत्यनेन सूत्रेण विहितो विशेषणसमासो वा अयम् । 'मयूरव्यंसकादयश्च' इत्यनेन विहितोऽन्यो वा । यत्र तु एवंविधं नियामकं न किञ्चिदस्ति; यथा

जयत्यखिलनाथस्य श्रीपतेः पदपङ्कजम् ।

इत्यादौ, तत्र रूपकोपमयोः सन्देहसङ्करः । सर्वमिदं स्पष्टमुक्तमेकावल्यां विद्याधरेण, तद्व्याख्याने मल्लिनाथेन च ।—

विद्याधरः

"यत्र समस्तं तत्रोपमारूपकयोः साधकबाधकसद्भाव एव अन्यतरनिश्चयकारणम् । तत्रोपमायाः परिग्रहे साधकं यथा—

**शरासनमिदं नमत् तव विलोक्य लोकोत्तरं**
**पिनाकमिव दानवास्तुहिनरश्मिचूडामणेः ।**
**अमी रिपुमहीभृतो युधि कलिङ्गपृथ्वीपते**
**सरत्नबिरुदाङ्गदं तव नमन्ति पादाम्बुजम् ॥**

इह रत्नबिरुदाङ्गदसम्बन्धः पादे सम्भवतीत्युपमां प्रत्यनुगुणतां भजते । अम्बुजे न सम्भवतीति न रूपकं प्रत्यनुगुणता । बाधकं यथा—

**शोषिताशेषदुर्वारवैरिस्त्रीजनमानसः ।**
**नृसिंहभूपते भाति प्रतापतपनस्तव ॥**

अत्र शोषिताशेषदुर्वारवैरिस्त्रीजनमानसत्वलक्षणसाधारणधर्मोपादानमेव प्रतापस्तपन इवेत्युपमायाः शङ्कामपाकरोति । 'उपमितं व्याघ्रादिभि'रित्यादिना सूत्रेण सामान्याप्रयोग एव तस्याः प्रादुर्भावात् । रूपकपरिग्रहे साधकं यथा—

यस्यानिशं दिविषदश्चरणारविन्द-
मुत्तंसयन्त्यमितभक्तिभरावनम्राः ।
देवः सुधाकरकिशोरकचारुचूडः
स श्रेयसेऽस्तु भवतो नरसिंहदेव ॥

अत्र उत्तंसनमरविन्देन क्रियते न पुनश्चरणेनेति रूपकपरिग्रहे उत्तंसनमेव साधकं प्रमाणम् ।............... यत्र पुनरन्यतरपरिग्रहे साधकबाधकप्रमाणविरहः तत्र सन्देहसङ्करः ।" इति ।

मल्लिनाथः

"इहेति । तेनेह व्याघ्रादीनामाकृतिगणत्वात् 'उपमितं व्याघ्रादिभि'-रित्यादिना उपमितसमास आश्रयणीय इत्यर्थः । उपमाबाधकमुदाहरति शोभितेति । मानसं मनः सरोविशेषश्च । बाधकमुद्भावयति अत्रेति । समानधर्मोपादानस्य बाधकत्वे हेतुमाह उपमितमिति । 'व्याघ्र इव शूर' इति प्रत्युदाहरणादिति भावः । ...............ततो 'मयूरव्यंसकादयश्च' इति रूपकसमास आश्रयणीयः । तेषामाकृतिगणत्वादित्यर्थः । रूपके बाधकं तु 'मुकुलितनयनैर्मुखारविन्दैर्घनमहतामिव पक्ष्मणां भरेण' इत्यत्र । मुखैरेवारविन्दैरिति रूपकपरिग्रहे मुकुलितनयनैरिति विशेषणं बाधकम् । अरविन्दानां नयनसम्बन्धाभावात् । ततः पारिशेष्यात् व्याघ्रादित्वादुपमितसमास इत्याद्यूह्यम् ।" इति ।

उद्भटवामनौ

मम्मटस्य ततोऽर्वाचीनानां प्रायः सर्वेषामपि चायमभिप्रायः । प्राचीनेषु उद्भटोऽप्येवमेव मन्यत इति प्रतीमः । एवं हि तस्य सन्देहसङ्करोदाहरणम्—

"यद्यप्यत्यन्तमुचितो वरेन्दुस्ते न लभ्यते ।
तथापि वच्मि कुत्रापि क्रियतामादरो नरे ॥"

अत्र विवरणम्—'अत्र वरेन्दुरिति वर एवेन्दुः वर इन्दुरिवेति रूपक-समासोपमयोर्द्वयोरलङ्कारयोरुल्लेखः । अत्र तु द्वयोः साधकबाधकप्रमाणयोरभावात् सन्देहः' इति । वामनः पुनः पदपङ्कजादिषु रूपकस्य नैव सम्भवः । अपि तु उपमैवेति मन्यते । यथाह—

"मुखचन्द्रादीनां तु उपमासमासान्न रूपकत्वं युक्तम्"

इति। उपमासमासः उपमितमित्यादिसूत्रविहितः। एवमेषां मतं पूर्वपक्षीकृतम्। अथ सिद्धान्त उच्यते।

भामहदण्डिनौ

भामहदण्डिरुद्रटभोजराजानां अस्मिन् विषये अन्य एवाभिप्रायः। स एवेह उपपन्नत्वात् सिद्धान्तीक्रियते। तथाहि। भामहस्तावत्

**उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते।**
**गुणानां समतां दृष्ट्वा तद् रूपकम्........॥**

इति रूपकं लक्षयित्वा

**शीकराम्भोमदसृजस्तुङ्गा जलददन्तिनः।**
**निर्यान्तो मदयन्तीमे शक्रकार्मुकवारणाः॥**

इत्युदाजहार। अत्र उपमापि सम्भवतीति न तेन क्वचिद् ज्ञापितम्। ज्ञापितं तु न सम्भवतीति। स हि 'समासाभिहिताऽपरा' इति समासगतं उपमाभेदं निर्दिश्य तस्य

**यथा कमलपत्राक्षी शशाङ्कवदनेति च।**

इत्युदाहरणं ददत् बहुव्रीहिसमासस्थल एव तत्सम्भव इति दर्शयति। कण्ठत एवेदमाह दण्डी—

**समासश्च बहुव्रीहिः शशाङ्कवदनादिषु।**

इति। तदनयोरुभयोरप्यालङ्कारिककूटस्थयोर्बहुव्रीहिव्यतिरिक्तस्थले उपमा सर्वथाऽनभिमतेति स्पष्टम्।

**उपमैव तिरोभूतभेदा रूपकमुच्यते।**
**यथा बाहुलता पाणिपद्मं चरणपल्लवम्॥**

**अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः।**
**बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी॥**

इत्येतदसमस्ताख्यं समस्तं पूर्वरूपकम् ।
स्मितं मुखेन्दोर्ज्योत्स्नेति समस्तव्यस्तरूपकम् ॥

इति रूपकनिरूपणं कुर्वन् दण्डी व्यस्तरूपकस्य स्वाङ्गीकारं दर्शयतीति विशेषः ।

रुद्रटः

रुद्रटस्यापि पूर्ववदेवाभिप्रायः । स हि समासोपमां त्रिविधां निरूपयन्— 'उपमानानि सामान्यवचनैः' इत्यनेन सूत्रेण विहिते समासे प्रथमा । यथा

मुखमिन्दुसुन्दरमिदं बिसकिसलयकोमले भुजालतिके ।
जघनस्थली च सुन्दरि तव शैलशिलाविशालेयम् ॥

एवंविधसमासपदं पूर्वपदं उपमेयवाचकमुत्तरपदं च कृत्वा यत्र बहुव्रीहिर्भवति तत्र द्वितीया । यथा—

शरदिन्दुसुन्दरमुखी कुवलयदलदीर्घलोचना सा मे ।
दहति मनः कथमनिशं रम्भागर्भाभिरामोरूः ॥

"उपमानपदेन समं यत्र समस्येत चोपमेयपदम् । अन्यपदार्थे सा....अन्या" । यथा—

नवविकसितकमलकरे कुवलयदललोचने सितांशुमुखि ।
दहसि मनो यत् तत् किं रम्भागर्भोरु युक्तं ते ॥

—इति 'अन्यपदार्थे समस्येत सा अन्ये'ति बहुव्रीहिमेव उपमाप्रयोजकसमासत्वेनाह । इदमप्यत्रावधेयम् । कमलपत्राक्षी शशाङ्कवदना नवविकसितकमलकरे इत्यादिषु एषां त्रयाणामपि ग्रन्थकृतां समासोपमोदाहरणेषु उपमानपदं पूर्वपदं उपमेयपदमुत्तरपदमिति नियमदर्शनात् तद्व्यत्यये बहुव्रीहावप्युपमा न भवतीति ।

भोजराजः

भोजराजमते समासोपमा चतुर्विधा । तत्र 'उपमानानि सामान्यवचनैः' इति सूत्रविहितसमासगां 'अन्तर्भूतेवा' इति समाख्याय 'मुखमिन्दुसुन्दरं ते' इति रुद्रटश्लोकमेवोदाहरणतया स पपाठ ।

चन्द्रसदृशं मुखमस्या अमृतसदृशश्च मुखरसस्तस्याः

इति सदृशोत्तरपदसमासगां द्वितीयां अन्तर्भूतसामान्येत्याह । अन्तर्भूतोभयार्थेति तृतीयां निर्दिश्य

कमलकरा रम्भोरूः कुवलयनयना मृगाङ्कवदना सा ।
कथं नु नवचम्पकाङ्गी मृणालबाहुः प्रिया तपति ॥

इतीदं रुद्रटश्लोकप्रत्यभिज्ञापकं प्राकृतगाथारूपेणोदाहरति स्म । सर्वसमासेत्यभिहितायाश्चतुर्थ्याः 'शरदिन्दुसुन्दरमुखी' इति रुद्रटोक्तमेव निदर्शनं ददौ । अत्र उपमानोपमेयपदद्वयमात्रनिष्पन्नसमासगतस्य समासोपमायास्तृतीयप्रभेदस्य 'कमलकरा' इत्याद्युदाहरणं दददयं बहुव्रीहावेवायं प्रभेदः सम्भवतीति स्वाशयं स्फुटमेव प्रकाशयति ।

समासः

तदेवमेषां चतुर्णां मते बहुव्रीहिव्यतिरिक्तस्थले समासोपमाया नास्ति सम्भव इति स्थितम् । अथ जलददन्ति-बाहुलता-वरेन्दु-मुखचन्द्र-पदपङ्कजादिषु एषां मतेन रूपकैकोदाहरणेषु कः समास इति चिन्तनीयम् । तत्र न तावत् 'विशेषणं विशेष्येण बहुलम्' इत्यनेन विहितो नीलोत्पलमित्यादाविव विशेषणसमासः । पूर्वपदवाच्यानां जलदादीनां स्वप्रधानत्वेन विशेषणत्वाभावात् । नापि 'उपमितं व्याघ्रादिभि'रिति सूत्रविहित उपमितसमासः । उपमाया अनभ्युपगमेन तद्विरहे जलदादीनामुपमितत्वाभावात् तद्रूपोपाधिकस्य समासस्य दुर्वचत्वात् । तदुपगमे वा उपमाया अवश्यम्भावात् । नापि 'मयूरव्यंसकादयश्च' इत्यनेन विहितः । तस्य

> मयूर । मयूर इव व्यंसको धूर्तः । छात्र इव व्यंसकः । कम्बोज इव मुण्डः । इत्युपमानसमासापवादोऽयं समासः प्रतिपदविहितोपमानसमासविषयपूर्वपदप्रकृतिस्वरबाधनार्थं इत्याहुः ।

इति वदता कैयटेन 'उपमानानि सामान्यवचनैः' इत्येतदपवादत्वज्ञापनेन उपमानं यत्र पूर्वपदं सामान्यवाचि चोत्तरं तत्रैव प्रवृत्तेः । प्रकृते तदभावात् । हरदत्तेन चान्यथा व्याचक्षाणेनापि

> मयूरव्यंसक इति । व्यंसको धूर्तः । मयूरश्चासौ व्यंसकश्चेति व्यंसकशब्दस्य गुणवचनत्वात् पूर्वनिपाते प्राप्ते वचनम् । एवं छात्रव्यंसकादीनां कम्बोजमुण्डपर्यन्तानाम् । अन्ये त्वाहुः मयूर इव व्यसकः............

इति विशेषणसमासापवादत्वख्यापनात् प्रकृते न प्रवृत्तिः। यत्तु "अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः।" इति काशिकोक्तिबलात् मुखचन्द्रादिषु एतत्प्रवृत्तिमाचक्षते तत् काशिकाभिप्रायस्यैव विरुद्धम्। अस्मिन् सूत्रे तादृशपदानुदाहरणेन प्रत्युत उपमितसूत्र एव

"आकृतिगणश्चायम्। तेनेदमपि भवति—मुखपद्मम्। मुखकमलम्। करकिसलयम्। पार्थिवचन्द्रः।"

इति तदुदाहरणेन विहितलक्षणत्वस्यैव एषां पदानां तदभिप्रेतत्वावगमात्। न च मुखं पद्ममिवेत्युपमाभिप्रायेण तत्र तदुदाहरणमिति वाच्यम्। तत्र ज्ञापकलेशस्याप्यभावात्। प्रतिज्ञामात्रस्य अश्रद्धेयत्वात्। तदत्र वाच्यं कः समास इति।

अत्रोच्यते। उपमितसमास एवायं नान्यः। नन्वेवं सत्युपमावद्यम्भाव इति चेत् न। तत्प्रयोजकाभावात्।

### विग्रहः

अथात्र जलदा दन्तिन इव पदं पङ्कजमिव इति विग्रहप्रदर्शनात् अत्र उपमायाः स्पष्टत्वात् विग्रहे योऽर्थस्तस्य समासेनापि प्रत्याय्यत्वात् उपमा दुष्परिहरेति चेत् नैतदेवम्। तथाहि—पदं पङ्कजमिवेति यदि विग्रहवाक्यं यदि च तत्रोपमा तर्हि पङ्कजपदं स्वार्थवृत्त्येव। ततः किमिति चेत् सामानाधिकरण्याभावः। पदं पङ्कजमित्यनयोः क्रमेण चरणपद्मरूपस्वस्वार्थवाचकत्वेन भिन्नार्थनिष्ठत्वात्। एकार्थवृत्तित्वं हि सामानाधिकरण्यम्। समानाधिकरणयोश्चायं समासः, न व्यधिकरणयोः। "समानाधिकरणेन' इत्यापादपरिसमाप्तेरधिकारः" इति ह्याहुः। कथं तर्हि विग्रह इति चेत् नीलोत्पलमित्यत्र यथा तथैव। नीलमुत्पलम् नीलोत्पलम् इति तत्र। अत्रापि जलदा दन्तिनः जलददन्तिनः पदं पङ्कजं पदपङ्कजम् इति। नीलं च तत् उत्पलं च इति तत्र विग्रहं प्रदर्शयन्तीति चेत् अत्रापि जलदाश्च ते दन्तिनश्च, पदं च तत् पङ्कजं च इति प्रदर्शयितुं प्रवर्तमानान् को वारयिष्यति। नन्वत्र नीलोत्पलवत् सामानाधिकरण्यं नास्तीति चेत् गौणवृत्त्याश्रयणेन तत्सम्पत्तिः। दन्तिशब्दो जलदेषु पङ्कजशब्दश्च पदे गौणः। तेन सामानाधिकरण्यं भवति। ननु जलदा दन्तिन इव पदं पङ्कजमिव इत्येवं प्रायः सर्वैः क्रियमाणं विग्रहप्रदर्शनं

कथमिति चेत् अनपेक्षित एव इवशब्दः दन्त्यादिशब्दानां सादृश्यनिमित्तकं गौणत्वं स्फुटीकर्तुं प्रयुज्यते । न तु विग्रहवाक्यस्यायमवयवः । तथा चेत्

'पुनरुक्ताभासमभिन्नवस्त्विवोद्भासिभिन्नरूपपदम्'

इत्युद्भटश्लोक इव तस्य श्रवणमवर्जनीयम् । लोपशास्त्राभावात् । आह चोपमानसूत्रे भट्टोजिः—

"घन इव श्यामो घनश्यामः । इह पूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते"

इति । सूचयितुं न तु स्वार्थस्य क्वचिदन्वयं प्रतिपादयितुम् । तेन विग्रहवाक्य एव तस्य सम्बन्धो नास्तीत्यर्थः । यत्तु

"न च व्याघ्र इवेतीवशब्दस्तद्बोधक इति वाच्यम् । तस्य समासे सम्बन्धाभावात् । सति च सम्बन्धे तन्निवृत्तेरयोगात् । निवर्तकशास्त्राभावात् । विग्रहवाक्यगत इवशब्दः स्वघटितवाक्यस्योपमाप्रतिपादकत्वं सम्पादयितुमीष्टे, न वाक्यान्तरस्य ।"

इति रसगङ्गाधरे इवशब्दस्य विग्रहवाक्यघटकत्वमभ्युपगम्येवोक्तम्, तदर्थान्तरप्रतिपादने संरम्भातिशयात् कृत्वाचिन्तया । यदि हि विग्रहवाक्ये इवशब्दबलादुपमाऽङ्गीक्रियते तर्हि सामानाधिकरण्यभङ्गादुपमानोपमेयवाचकयोः पदयोः समासप्रसङ्ग एव न स्यात् । स्पष्टीकृतं चेदं भट्टोजिना शब्दकौस्तुभे—

"घनश्यामादौ तु घनादयः शब्दा यद्यपि घनादिसदृशे उपमेये संक्रान्ताः तथापि भूतपूर्वगत्या उपमानवाचिता द्रष्टव्या । इदमेव दर्शयितुं लौकिके विग्रहवाक्ये इवशब्दः प्रयुज्यते । न त्वसौ प्रक्रियोपयोगीत्यवधेयम्"

इति । अन्यच्चात्र वक्तव्यमुपरि वक्ष्यते । तस्मात् कैश्चित्प्रयुज्यमानस्यापि इवशब्दस्य वाक्यानन्वयित्वात् न तद्बलेन उपमा सुवचा । वस्तुतस्तु उक्तरीत्या विशेषणसमासस्थल इव इवशब्दाघटितमेव विग्रहवाक्यं प्रयोक्तव्यम् । सर्वमिदं स्फुटीकृतम्

"एवं तर्हि समानाधिकरणसमास एवायम्—शस्त्री चासौ श्यामा चेति । कथं पुनर्देवदत्तायां शस्त्रीशब्दः । जातिशब्दो ह्यसौ । सादृश्यनिमित्तादभेदोपचारात् । यथा गौर्वाहीक इति"

"यद्येवं शस्त्रीशब्दोऽप्युपमेये सङ्क्रान्त इत्युपमानवाचित्वं नोपपद्यते। सत्यम्। पूर्वावस्थाश्रयेण तूपमानत्वं द्रष्टव्यम्। इवशब्दप्रयोगस्तूपमानप्रदर्शनार्थो न प्रक्रियावाक्याङ्गमिति न कश्चिद्दोषः"

इत्युपमानसूत्र एव वदता पदमञ्जरीकारेण हरदत्तेन।

**उपमितम्**

अथोच्येत—यदि जलदाश्च ते दन्तिनश्च इत्यादिर्विग्रहः स्यमायाश्च सर्वथा न प्रसक्तिः तर्हि जलदादीनामुपमितत्वं नास्तीति तन्निमित्तकः समासः कथमत्र घटेतेति, तन्न। उपमानसूत्रे हरदत्ताद्युक्तरीत्या भूतपूर्वगत्याश्रयणात् तदुपपत्तेः। ननु किमत्र भूतपूर्वं यदाश्रित्य उपमितत्वमुपपाद्येत। निष्पन्नावस्था तावत् समासरूपा। ततः प्राक्तन्यवस्था विग्रहवाक्यात्मिका। अत्रापि च भवता इवशब्दमनिच्छता विशेषणसमासरीतिमेवानुसरता च उपमा प्रतिषिध्यते। तत्र का भूतपूर्वगतिर्नामेति चेत् अत्र ब्रूमः। विग्रहवाक्यादपि प्राक्तनी पदावस्था नाम काचिदस्ति अपराऽवस्था, यत्र उपमानोपमेययोः स्थितं सादृश्यं निमित्तीकृत्य उपमेये उपमानाभेद आरोप्यते—दन्तिन इव, दन्तिनः। पङ्कजमिव, पङ्कजम्। इति। अत्र दन्तिन इव पङ्कजमिव इति आरोपे निमित्तभूतस्य सादृश्यस्याभिलापः। दन्तिनः पङ्कजम् इति आरोपितार्थविशिष्टविषयाभिलापः। अत्र अभिधया समवायसम्बन्धेन गजत्वपद्मत्वजातिमद्वचनौ दन्तिपङ्कजशब्दौ आरोपसम्बन्धेन तद्वद्वचनौ भवतः। तत्र आरोपनिमित्तस्य सादृश्यस्य यदाऽनुसन्धानम्, अस्ति तदा उपमेति भवत्युपमेयत्वं जलदानां पदस्य च। सा तूपमा अभेदारोपसमनन्तरमेव तिरोभवतीति पदावस्थायामेव नास्ति सा, किमुत विग्रहावस्थायाम्। तथा च तामवस्थामादाय उपमितत्वमुच्यत इति सुष्ठु तावदेतद् यद् भूतपूर्वगत्याश्रयणमिति। इदमभिप्रेत्यैव भगवता पाणिनिना उपमितमिति निष्ठा प्रयुक्ता, न तु उपमेयमिति कृत्यः। उपमानानीत्यत्र तु तथा विशेषस्य दर्शयितुमशक्यत्वादुपेक्षा। अत्रैव तु ज्ञापितं तत्राप्यनुसन्धास्यत इति च मेने। अत एव

"उपमेयमुपमितम्।" "उपमितमित्यत्र भूतकालो न विवक्ष्यत इत्याह—उपमेयमुपमितमिति"।

इति एतैरेव वैयाकरणैर्यदुक्तं तन्न हृदयङ्गमम्। एवं च पदावस्थायामेव उपमाया अपगमात् कथं विग्रहवाक्ये तत्प्रसक्तिः। कथन्तरां समास इति निपुणं निरूपणीयम्। एतेन येयं समाख्या उपमितसमास इति, सा उपमितपदघटितसूत्रविहितत्वेन, न तु कथमप्युपमाप्रयोजकत्वेनेति व्यक्तम्।

### सामान्याप्रयोगः

अथैवमपि जलददन्तिन इति भामहीये रूपकोदाहरणे अयमुपमितसमासो न सम्भवी। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति सामान्याप्रयोग एव तद्विधानात्। अत्र च 'तुङ्गा जलददन्तिनः' इति तुङ्गत्वस्य सामान्यस्य प्रयुक्तत्वात्। अत एव 'भाष्याब्धिः क्वातिगम्भीरः' इति कैयटप्रयोगे इमामाशङ्कामुद्भावयद्भिः कैश्चिदुक्तम्—

"कथं तर्हि 'भाष्याब्धिः कातिगम्भीरः' इति कैयटः। सामान्यप्रयोगसत्त्वेनास्य अप्राप्तेः। अत्र केचित् प्रमाद एवायमित्याहुः।"

इति। नागेशोऽपि "'भाष्याब्धिः कातिगम्भीरः' इत्यादौ तु मयूरव्यंसकादित्वात् समासः" इत्याह। अत एव च अप्पय्यदीक्षितः कुवलयानन्दे एवमाह—

"अत्र ह्यब्जस्य वीक्षणोपयोगित्वं निबध्यते, न तु दृशः। मयूरव्यंसकादिसमासेनोत्तरपदार्थप्राधान्यात्। न चोपमितसमासाश्रयणेन दृगब्जमिवेति पूर्वपदप्राधान्यमस्तीति वाच्यम्। प्रसन्नेनेति सामान्यधर्मप्रयोगात्। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति तदप्रयोग एवोपमितसमासानुशासनात्।"

इति। एकावलीकारस्य विद्याधरस्योक्तिश्च पूर्वमेवोदाहृता। तस्मात् जलददन्तिप्रभृतिषु उपमितसमासानुपपत्तिस्तदवस्थेति चेत्

### महाभाष्यकैयटौ

अत्रेदं मीमांसितव्यम्—'सामान्याप्रयोगे' इति वदतो भगवतः पाणिनेः कोऽभिप्राय इति। तत्र महाभाष्ये तावत् तदुपादानफलम्—

"सामान्याप्रयोग इति किमर्थम्। इह मा भूत्। पुरुषोऽयं व्याघ्र इव शूरः। पुरुषोऽयं व्याघ्र इव बलवान्।"

इत्येवं दर्शितमिति भाति । तत्राह कैयटः—

“पुरुषोऽयं व्याघ्र इव शूर इति। उपमानप्रतिपादनपरमेतत् । वैयधिकरण्यादेवात्र समासस्याप्रसङ्गः ।”

इति । उपमानेति भावे ल्युट् । अयं भावः । उपमितिक्रियाप्रतिपादनपरमिदं भाष्ये दर्शितं वाक्यम् । पुरुषं कञ्चन व्याघ्रेण उपमिमानो ह्येवं ब्रवीति । ततः किमिति चेत् पुरुषव्याघ्रपदयोर्वैयधिकरण्यं, न सामानाधिकरण्यम् । ततोऽपि किमिति चेत् सामानाधिकरण्यनिबन्धनस्यास्य समासस्य तत्र प्रसङ्ग एव नास्ति । तथा च तद्वारणाय सामान्याप्रयोग इति न वक्तव्यं सूत्रकारेण । तत्प्रयोगे हि वैयधिकरण्यं नियतम् । तत्र समासस्य कः प्रसङ्ग इति । एवमेकधा वैयर्थ्ये उपपादिते पुनरपि प्रकारान्तरेण तदुपपादनं कृतं भाष्ये—

“सामान्याप्रयोग इति शक्यमवक्तुम् । इह कस्मान्न भवति । पुरुषो व्याघ्र इव शूरः। पुरुषो व्याघ्र इव बलवान् । असामर्थ्यात् । कथमसामर्थ्यम् । सापेक्षमसमर्थं भवतीति ।”

अथापि

“प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्रं प्रणयति स्म । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम् । किं पुनरियता सूत्रेण ।”

इति स्वोक्तमनुस्मरता भाष्यकृता सानुशयमिव अनुपदमुक्तम्—

“एवं तर्हि सिद्धे सति यत् सामान्याप्रयोग इति प्रतिषेधं शास्ति तद् ज्ञापयत्याचार्यः भवति वै प्रधानस्य सापेक्षस्यापि समास इति । किमेतस्य ज्ञापने प्रयोजनम् । राजपुरुषोऽभिरूपः । राजपुरुषो दर्शनीयः । अत्र वृत्तिः सिद्धा भवति ।”

इति । अत्र कैयटः

“भवति वै प्रधानस्येति । न्यायसिद्ध एवार्थे लिङ्गदर्शनमिदम् । प्राधान्यादेवानेकोपकारकोपकार्यत्वाविरोधात् समासस्य सिद्धत्वात् ।”

इति वदन् 'ज्ञापनमपीदं ज्ञातस्यैव नाज्ञातस्य । तस्मादिदमपि प्रयोजनं नास्ती'ति वैयर्थ्यमेव द्रढयामास । तस्मात् त्रिषु मुनिषु प्रमाणतमस्य तृतीयस्य मुनेः तदीयमहाभाष्यव्याख्यातृत्वेन प्रसिद्धतमस्य महावैयाकरणस्य च मतेन सूत्रे 'सामान्याप्रयोगे' इत्येतदविद्यमानप्रायमेवेति न तदनुरोधेन प्रकृते समासनिषेधः शङ्कामर्हति । यद्युच्येत एवं सूत्रखण्डस्य अभिप्रायशून्यता मा भूदित्येतदर्थमेवात्र अर्थान्तरं वर्णनीयम् । समानाधिकरणस्थल एव यत्र सामान्यप्रयोगो भवति तत्र समासो न भवतीति; तत्र ब्रूमः । कल्प्यमानमर्थान्तरं दृष्टाविरोधेन कल्पनीयम् । वैयाकरणमूर्धन्या एव हि सन्तो भामहकैयटप्रभृतयः सामान्यं च प्रयुञ्जते समासं च कुर्वन्ति । न हि ते तत्र प्रमत्ता इत्यत्र किञ्चन प्रमाणमस्ति । ननु सत्यमेतत् यत्ते सामान्यं च प्रयुञ्जते समासं च कुर्वन्ति । किं तु स समासो नोपमितसमासः । अपि तु मयूरव्यंसकादिरिति चेत् सुष्ठु तावत् सूत्रकारस्य रिक्तभाषित्वाद्रक्षणं क्रियते । यदि हि सामान्यप्रयोगवतोऽपि समासस्य साधुत्वमनिवार्यमभिमतं च तदा तत्प्रतिषेधमात्रफलकं पदविशेषं सूत्रान्तरे विन्यस्य सूत्रान्तरेण तमनुशासितुं कथं भगवान् पाणिनिः प्रवर्तेत, यः सूत्रकृतामग्रणीर्विख्यातः । वैयर्थ्यमेव हि पुनरेवमङ्गीकृतं भवति ।

किञ्चात्र नवीनवैयाकरणकूटस्थेन प्रौढमनोरमायां यदुक्तं तदवधीयताम् ।—

" उच्यते । इह गाम्भीर्येण सादृश्यं न विवक्षितम् । किन्तु विततदुरवगाहत्वादिना । तस्य चाप्रयोगोऽस्त्येवेति निर्बाधः समासः"

इति तत्रोक्तम् । एवं समाससाधुत्वसमर्थनसम्प्रदायः भट्टोजेः प्रागपि चिरादनुवृत्त इति

यद्विवक्षितसामान्यं तत्प्रयोगो निषिध्यते ।
उक्तिस्तदन्यसामान्यविषया न विरुध्यते ॥
विवक्षितं तु सामान्यं स्वादुत्वादिकमिष्यते ।
तत्पुनर्नोच्यते साक्षात् समासस्तेन सिध्यति ॥
अविवक्षितसामान्यप्रयोगः काव्यशास्त्रयोः ।
दृश्यते बहुशस्तस्मात् समासोऽत्र न दूष्यते ॥

इति श्रीवेङ्कटनाथीयतत्त्वटीकाग्रन्थादवगम्यते । एवं समादधानानामयमाशयो लक्ष्यते । सामन्यप्रयोगे सत्येव समासस्य काव्ये शास्त्रे च बहुशो दृश्यमानत्वात् तत्र साधुत्वं

तावद् दुर्वारम् । तथापि 'सामान्याप्रयोगे' इति निषेधविषयत्वप्रतीत्या असाधुत्वशङ्का भवति । यथेयमुच्छिद्येत तथा तस्य व्याख्यानं कर्तव्यम् । तत्रेयं दिक् । सामान्यस्य विवक्षितत्वाविवक्षितत्वाभ्यां भेदः कल्प्यताम् । प्रयुक्तं सामान्यं नियमेनाविवक्षितमिति, विवक्षितं सामान्यं नियमेनाप्रयुक्तमिति चोच्यताम् । भाष्याब्धिः कातिगम्भीर इत्यत्र प्रयुक्तत्वात् गाम्भीर्यमविवक्षितं सामान्यम् । विवक्षितं तु तदन्यत् विततत्वादि । तच्चाप्रयुक्तम् । यदि भाष्याब्धिः कातिवितत इति श्रूयेत तर्हि विततत्वमविवक्षितं गाम्भीर्यादि तु विवक्षितमिति वक्तव्यम् । तथा च सामान्याप्रयोगे विवक्षितसामान्याप्रयोगे इत्यर्थः । दिङ्मात्रमेवेदम् । अत्रानुपपत्तिप्रतिसन्धाने सम्भवद् व्याख्यानान्तरं यथाकामं क्रियताम् । सामान्यप्रयोगवतः समासस्य तु असाधुत्वं वा एतत्सूत्राविषयत्वं वा कथमपि न वक्तव्यमिति ॥ अत्र श्रुतपरित्यागपर्यवसायि प्रयुक्तस्याविवक्षितत्वं, अश्रुतार्थकल्पनपर्यवसायि अप्रयुक्तस्य विवक्षितत्वं, 'सकलकलः पुरचन्द्रः' इत्यादौ अहृदयमेव अप्रयुक्तसामान्यविशेषान्वेषणप्रयास इत्यस्त्येव बहुसामञ्जस्यम् । किंच विवक्षितसामान्यप्रयोगवति स्थले समासस्य प्रसङ्गोऽस्ति न वा । नाद्यः । भाष्यमिदं अब्धिरिव विततम् । भाष्यमिदं अब्धिरिव दुरवगाहम् । इत्याद्येव हि तादृशं स्थलम् । तत्र भाष्यप्रदीपोक्तरीत्या वैयधिकरण्यात् असामर्थ्याच्च कः प्रसङ्गः समासस्य । नान्त्यः । सामान्याप्रयोग इत्यस्य अप्रसक्तप्रतिषेधत्वापत्तेः । वैयर्थ्यस्यैव एवमभ्युपगमाच्च । तस्मात् सामान्यप्रयोगवतः समासस्य सर्वथा साधुत्वप्रतिपादन एव तेषां संरम्भः । न तु सामान्याप्रयोग इत्यस्य उक्त एवार्थो ग्राह्य इत्यत्र । अतः सिद्धमेतत् यदर्वाचीनेषु एकद्वान् विना नान्यः कश्चन प्रसिद्धो वैयाकरणः तुङ्गा जलददन्तिन इत्यादौ उपमितसमासस्यानुपपत्तिलेशमपि मन्यत इति ।

**पाणिनिः**

इदमत्रावधेयम् । सामान्याप्रयोग इति वदतो भगवतः पाणिनेरयमभिप्रायः । उपमितं व्याघ्रादिभिरिति समासानुशासने क्रियमाणे एवं शङ्क्येत—व्याघ्रादेरुपमानवाचिनः पदस्य उपमितवाचिना सामानाधिकरण्यविरहात् कथं समास इति । न तथा शङ्कितव्यम् । पुरुषो व्याघ्र इव शूर इति सामान्यप्रयोगे सति हि व्याघ्रपदस्योपमानमात्रवाचितया वैयधिकरण्यं भवति । यदा तु अग्निर्माणवक इत्यादाविव व्याघ्रादिपदस्य गौण्या उपमेयवाचित्वं कृत्वा 'इव शूरः' इत्यादिसामान्यप्रयोगो न

क्रियते तदा सामानाधिकरण्यं सुसम्पन्नमिति समासो निर्विघात इति । एवञ्च न यत्र क्वचित् समासप्रतिषेधाय सामान्याप्रयोग इत्युक्तम्; अपि तु अपेक्षितसामानाधिकरण्योपपत्तिप्रदर्शनायेति सिध्यति ।

**आशयः पाणिनेरेष स्फुटमेव प्रकाशते ।**
**सूत्रे सामान्यशब्देन किं वाच्यमिति चिन्तनात् ॥**

यदि साधारणधर्ममात्रं सामान्यमिति इह विवक्ष्यते तर्हि 'पुरुषो व्याघ्र इव' इत्यत्र समासप्रसङ्गः । सामान्याप्रयोगात् । न चेष्टापत्तिरत्र सुवचा । इवशब्दोपात्तसादृश्यप्रतियोगितया उपमानमात्रस्य व्याघ्रपदेनाभिधानात् सामानाधिकरण्यविरहस्य तदवस्थत्वात् । तस्मात् साधारणधर्मस्य शब्दत उपादाने वा गम्यत्वं कृत्वा अनुपादाने वा इवशब्दवति स्थले समासो न भवतीति स्थितम् । तत्र सामानाधिकरण्याभावो हेतुः । स च पुरुषव्याघ्रपदयोः भिन्नार्थनिष्ठत्वात् । एवं च पर्यन्ततः वाच्ययोर्भेदः वाचकयोः समासाभावे हेतुरिति, तयोर्भेदविरहे तद्वाचकयोरेकार्थनिष्ठत्वरूपसामानाधिकरण्यसम्पत्त्या समासो भवत्येवेति च सिध्यति । सामान्यमिति साधारणधर्म उच्यते । साधारण्यं च धर्मस्य मिथोविभिन्नानेकपदार्थवृत्तित्वम् । पुरुषो व्याघ्रः शूर इत्यत्र शूरत्वं न साधारणधर्मरूपं सामान्यम् । पुरुषाभिन्नो व्याघ्र इति वा व्याघ्राभिन्नः पुरुष इति वा जायमाने बोधे वाच्यद्वयस्य भेदाभावेन शूरत्वस्यानेकवृत्तित्वात्मकसाधारण्याप्रतीतेः । न चैवं सति 'भाष्याब्धिः क्वातिगम्भीरः' 'सकलकलः पुरचन्द्रः' इत्यादौ गाम्भीर्यसकलकलत्वादेः सार्वत्रिकः साधारणधर्मत्वव्यवहारोऽनुपपन्नः स्यादिति शङ्क्यम् । रूपकनिमित्तसादृश्यनिरूपणावसरे भेदोन्मेषात् तदानीं तस्य साधारणधर्मत्वेन तत एव तथा प्रतीतिव्यवहारोपपत्तेः । न च पुरुषो व्याघ्रसदृश इति बोधे भवत्येव तथा प्रतीतिरिति वाच्यम् । तथापि शूरत्वस्य पुरुषमात्रान्वयितया साधारण्याभावात् । उपपादयिष्यमाणरीत्या व्याघ्रसदृशबोधस्यानुपपन्नतयाऽनभ्युपगमाच्च । तथा बोधाभ्युपगमे शूरः पुरुषो व्याघ्रसदृश इतिवत् उपमाया एवापत्त्या पुरुषो व्याघ्र इव शूर इत्येतत्तुल्यत्वेन साधारणधर्मत्वेऽप्यविरोधाच्च । एवं च यत्र पुरुषव्याघ्रयोरभेदं कृत्वा तद्वाचिपदद्वयं प्रयुज्यते तत्र शूरपदप्रयोगेपि तद्वाच्यस्य शूरत्वस्य विभिन्नानेकपदार्थानुगतत्वात्मकसाधारण्यरूपविशेषणाभावात्

अप्रयोग एव सामान्यस्य । यत्र तु पुरुषो व्याघ्र इवेति शूरपदाप्रयोगेऽपि इवशब्दः प्रयुज्यते तत्र अनेन भेदस्य प्रत्यायनात् तदुक्तसादृश्यानुपपत्त्या शूरत्वादेरनुगतधर्मस्य गम्यमानत्वाच्च प्रयोग एव सामान्यस्य भवति, नाप्रयोगः । तथा च सामान्याप्रयोग इत्यस्य भेदबोधकपदाप्रयोग इत्यर्थ इति पर्यवस्यति । युक्तं चैतत् । यदि हि समानधर्मवाचकपदाप्रयोग एव पाणिनेस्तात्पर्यमभविष्यत् स कथमव्यवहितपूर्वसूत्रे तादृशपदपरतया प्रयुक्तं सामान्यवचनपदमत्र अहास्यत् । 'उपमानानि सामान्यवचनैः' इति हि पूर्वसूत्रम् । तत्र सामान्यवचनैरिति योऽर्थो विवक्षितः स एव चेदत्रापि, तदेव पदं प्रायोक्ष्यत 'उपमितं व्याघ्रादिभिः सामान्यवचनाप्रयोगे' इति । प्रयुज्यते तु तत्रत्यवचनांशपरित्यागेन सामान्याप्रयोग इति। तेन स्पष्टमेव स्वाशयं सूत्रकार आवेदयति—अस्ति कश्चिदर्थस्य भेद इति । श्रुतस्य गम्यस्य वा धर्मस्य सामान्यत्वं, मिथोविभिन्नानेकधर्मिवृत्तित्वं, येन प्रतीयेत तस्याप्रयोग इतीह विवक्षितोऽर्थः । न तु वस्तुतो यत् सामान्यं तद्वाचिपदाप्रयोग इति । एवमुपमानोपमेययोर्भेदप्रत्यायकाप्रयोगे इति यदि सामान्याप्रयोग इति सूत्रखण्डस्यार्थः तर्हि तस्य सामानाधिकरण्योपपादकत्वं स्पष्टमेव । भाष्यप्रदीपादिरीत्या आपतितं वैयर्थ्यं च परिहृतं भवतीति ।

दण्डी

**उपमैव तिरोभूतभेदेति वदता मनाक् ।**
**दर्शितोऽयमभिप्रायः सूत्रकारस्य दण्डिना ॥**

पुरुषो व्याघ्र इव शूर इतीयमुपमैव भेदस्य तिरोभावे पुरुषो व्याघ्र इति रूपकं भवतीति वदन् दण्डी सामान्याप्रयोग इत्यस्य भेदबोधकाप्रयोग इत्येतदर्थपरतां ज्ञापयति ।

भोजराजः

**अभिसन्धिर्निगूढोऽयं दण्डिनो भोजभूभृता ।**
**निजे सरस्वतीकण्ठाभरणे विशदीकृतः ॥**

तथाहि । "तेषु समस्तं यथा—

**पाणिपद्मानि भूपानां सङ्कोचयितुमीशते ।**
**त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः ॥**

अत्र 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासे पद्मानीव पद्मानि चन्द्रा इव चन्द्रा इत्यभेदोपचारेण उत्पन्नसादृश्यान् (सादृश्योत्पन्नेन) पाणीनां नखानां च पद्मचन्द्रादिभिरभिधाने सामान्येवादिशब्दाप्रयोगात् उपमानार्थस्तिरोभूत इति सोऽयं गौणशब्दव्यपाश्रयः समासहेतुकः समस्तरूपकं नाम प्रकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः।"

इति तेन तत्रोच्यते। अस्योदाहरणस्य काव्यादर्शादुद्धृतत्वात् रूपकलक्षणे दण्डिप्रयुक्तस्य तिरोभूतपदस्य ग्रहणाच्च दण्डिसम्मत एवार्थोऽत्र प्रतिपिपादयिषित इति ज्ञायते। तेन 'तिरोभूतभेदा' इति यद् दण्डिनोच्यते तदेव 'उपमानार्थस्तिरोभूतः' इतीहोच्यत इति सुग्रहम्। उपमानरूपोऽर्थस्तिरोभूतः उपमेयाद् भिन्नत्वेन न प्रतीयते। उपमानोपमेययोर्भेदो न भासत इत्यर्थः। पाणिपद्मानीत्यादौ समासान्तरप्रसक्तेरेवाभावात् उपमितसमासं सिद्धं कृत्वा, तेन समस्यमानयोः पदयोः सामानाधिकरण्यं स्थितमिति 'पाणीनां नखानां च पद्मचन्द्रादिभिरभिधाने' इत्यनेन ज्ञापयित्वा, एवं सति तत्रानपेक्षितत्वादनन्वयाच्च भेदगर्भसामान्येवादिप्रयोगविरहं ततो भेदाप्रतीतिं च वदन् भोजराजोऽत्र दण्डयुक्तं लक्षणं सङ्गमयति। एवं लक्षणसन्मवयाय एषामर्थानामस्मिन् क्रमे भोजराजेनाश्रितेऽपि एतद्वैपरीत्येन भेदाविवक्षया सामान्येवाद्यप्रयोगे समस्यमानयोः पदयोरेकार्थवाचित्वेन सामानाधिकरण्यात् उपमितसमासो भवतीति क्रमान्तरेण पर्यालोचने सति समान्याप्रयोगे इत्यस्य सामानाधिकरण्यसम्पत्त्यमिप्रायत्वं सुज्ञानम्। सामान्यपदमात्रे सूत्रस्थे इवादिकमपि घटयन् भोजः भेदबोधकपरत्वं तस्य प्रकाशयति।

रुद्रटः

उपमानेन यत् तत्त्वमुपमेयस्य रूप्यते।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः॥

इति भामहीये रूपकलक्षणे स्थिते रुद्रटः

यत्र गुणानां साम्ये सत्युपमानोपमेययोरभिदा।
अविवक्षितसामान्या कल्प्यत इति रूपकं प्रथमम्॥

इति तल्लक्षणमाह । 'गुणानां समतां दृष्ट्वा' इत्यभेदोपचारनिमित्ततया भामहोक्तं सादृश्यमत्र 'गुणानां साम्ये' इत्युक्तम् । उपमानेन यत्तत्त्वमिति तत्रोक्तः उपमानोपमेययोरभेद इह अभिदेत्युक्तः । 'अविवक्षितसामान्या' इति तु किमुच्यते किमर्थं चोच्यत इति विमर्शनीयम् । अस्य श्लोकस्य नमिसाधुव्याख्यानमेवं दृश्यते—

"उत्तरत्र समासग्रहणादिह प्रथमशब्देन वाक्यरूपकं विवक्षितम् । उत्प्रेक्षायामप्यभेदो विद्यते । तन्निरासार्थमाह-अविवक्षितसामान्येति। सदप्यत्र सामान्यं न विवक्ष्यते सिंहो देवदत्त इति । उत्प्रेक्षायां तु छद्मलक्ष्मव्याजव्यपदेशादिभिः शब्दैरुपमानोपमेययोरभेदो भेदश्च विवक्षित इति । वस्तुतस्तूभयत्र अभेद एवेति"

इति । अत्र श्लोकस्थं सामान्यपदं भेदवाचीति व्याख्यानतः स्पष्टम् । एतेन सूत्रे सामान्यपदस्य योऽर्थः पूर्वमुक्तः स वृद्धसम्मत इति ज्ञेयम् । परं तु भेदाविवक्षाकथनस्यात्र किं फलमित्यत्र उत्प्रेक्षाव्यावृत्तिः फलमिति प्रथममभिधायापि व्याख्याता वस्तुतस्त्विति पश्चात् तस्य नैष्फल्यमेव मेने । इत्थं पुनरत्र वक्तुं शक्यम् । 'गुणसाम्यदर्शने उपमैव भविष्यति । कथमुपमानोपमेययोरभेद' इति भामहलक्षणे शङ्कोदये, भेदाविवक्षणात् गुणसाम्यदर्शनमुपमाप्रयोजकं न भवति । किं तु अभेदोपचारनिमित्तं भवतीति समाधातुमिच्छता दण्डिना 'उपमैव तिरोभूतभेदा रूपकमुच्यते' इत्यनेन अविवक्षितभेदा उपमैव रूपकमिति तल्लक्षणमुक्तमित्येवं मन्यमानो रुद्रटः भामहोक्तं दण्ड्युक्तं चोभयमपि निवेश्य स्वयं लक्षणं प्रणयति । एवं च अभेदोपपादनायैव भेदाविवक्षाभिधानमिति सिध्या एवं रूपकलक्षणं प्रणयद्भिरेतैरालङ्कारिकैः सूत्रे सामान्याप्रयोग इत्यस्य प्रयोजनान्तररहितस्य ईदृशमेव प्रयोजनमिष्यत इति प्रतीतेः तुङ्गा जलदन्तिन इत्यादिषु तुङ्गत्वादिग्रहणनिषेधः स्वप्नेऽपि केनचिन्न चिन्तित इति निपुणं विभावनीयम् । उपमानोपमेयोभयान्वययोग्ये विशेषणे सति व्यस्तरूपकं दृश्यते । यथा वेङ्कटनाथीये श्रीपादुकासहस्रे—

**रजसा तमसा च दुष्टसत्त्वे गहने चेतसि मामके मुकुन्दः ।**
**उचितं मृगयाविहारमिच्छन् भवतीमादृत पादुके पदाभ्याम् ॥ २६४ ॥**

चेतसि गहने विपिने इति हि रूपकमेतत् । अस्ति च तत्रोभयान्वययोग्यं विशेषणं

दुष्टसत्त्व इति। तत्र चेतोगहन इति यदि समासः क्रियेत का हानिर्भविष्यति येन तन्निषेधः क्रियेत।

### उपमितसूत्रम्

अथ यदि जलददन्तिनः पदपङ्कजमित्यादौ नीलोत्पलवदेव समासः तर्हि स विशेषणसमास एव, यः 'विशेषणं विशेष्येण बहुल'मिति सूत्रान्तरेण विहितः। तस्य तेनैव सूत्रान्तरेण सिद्धेः किं पुनरुपमितसूत्रारम्भेणेति चेत् अत्रोक्तमेवोत्तरम्—जलदादीनां विशेषणत्वाभावान्न तस्य समासस्य प्राप्तिरिति। न चैवं विशेषणत्वाभावे कथं नीलं च तदुत्पलं चेतिवत् जलदाश्च ते दन्तिनश्चेत्येवं विग्रहाभ्युपगमो युज्यते। इवशब्दायोगेऽपि जलदा एव दन्तिनः पदमेव पङ्कजमित्येवं हि विग्रहो वाच्य इति शङ्क्यम्। विशेषणसूत्रे प्रसिध्द्यनुरोधेन विशेषणपदेन येषां पदानां गुणः क्रिया वा प्रवृत्तिनिमित्तं तेषामेवाभिधानात् जात्यखण्डोपाधिप्रवृत्तिनिमित्तानां जलदादीनां स्वनिष्ठार्थवाचिनां पदानामग्रहणात् तत्सूत्रविहितसमासस्याप्राप्त्या सूत्रान्तरेण समासे विहिते 'प्रथमानिर्दिष्टं समास उपसर्जनम्' 'उपसर्जनं पूर्व'मित्यन्वर्थसंज्ञातत्कार्यानुरोधेन विशेषणत्वस्य कल्प्यमानत्वात्। जलदाश्च ते दन्तिनश्चेति विग्रहप्रदर्शनस्योचितत्वेऽपि नीलोत्पले नीलत्वेन विशेष्यमाणमुत्पलं यथा वस्तुतो विद्यते न तथा प्रकृतदन्तिप्रभृतयः पदार्था वस्तुतो विद्यन्ते। किन्तु आरोपितदन्तिभावास्ते इति आरोपवैशद्याय विग्रहे एवकारघटने विरोधाभावात्। निषादस्थपतिवत् जातिवाचिनामपि कथञ्चिद्विशेषणत्वमस्तीति कृत्वा विशेषणसमासप्राप्त्युपपादनेऽपि उपमेयपदस्य पूर्वनिपातनियमार्थं सूत्रस्यारम्भणीयत्वाच्च। अयमेव दन्तिजलदाः पङ्कजपदमित्येवं उपमानपूर्वपदसमासं कृत्वा रूपकं वा उपमां वा अप्रदर्शितवतां भामहादीनामभिप्रायः। उपमानोपमेययोर्द्वयोरपि स्वनिष्ठत्वेन विशेष्यत्वात् आपेक्षिके विशेषणत्वे कल्पनीये अनियमेन कदाचिदुपमानस्य कदाचिदुपमेयस्य तत्कल्पनायां प्राप्तायामनेन सूत्रेण नियमः क्रियते उपमेयस्यैव विशेषणत्वं कल्पनीयं नोपमानस्येति। तेन दन्तिजलदा इत्यादि न भवति। बहुव्रीहौ तु एवं नियमस्याभावात् शशाङ्कवदना वदनशशाङ्केत्युभयथाऽपि भवति। तत्र त्वयं विशेषः। बाधकाभावेनोत्तरपदार्थप्राधान्यं प्रतीतं रक्षित्वा पूर्वपदार्थस्य विशेषणत्वे कल्प्यमाने शशाङ्कवदनेत्यत्र पूर्वपदस्य मुख्यार्थसदृशलक्षणया शशाङ्कतुल्यवदनेतिवत् गुणवाचितयैव विशेषणत्वकल्पन-

भवात् तथैव तत्कल्पनेनोपमाऽङ्गीक्रियते न रूपकम्। वदनशशाङ्केत्यत्र तु दनस्यैव प्रकृतत्वात् उत्तरपदेनापि गौण्या तस्यैवाभिधानान्न सदृशलक्षणा सम्भवतीति भेदेनैव विशेषणत्वकल्पनाद्रूपकमेव नोपमेति।

भासहो रुद्रटो भोजो दण्डीत्येषामिदं मतम्।
तत्र चिन्त्यं चन्द्रमुखमित्यादिर्नोपमा कृतः॥

दि बहुव्रीहौ उपमानवाचिनः पूर्वपदस्य तत्सदृशलाक्षणिकतया उपमा भवति-सा कथं थैव तत्पुरुषे न भविष्यति। अनुशासनविरोधादिति चेत् न। सम्प्रतिपन्ने लक्ष्ये यते तदनुरोधेनानुशासनतात्पर्यास्यावधारणीयत्वात्। किं तथा लक्ष्यमस्तीति चेत् ाढमस्ति। 'कमलपाद' इति मुनिवाहनेन स्वगाथासु प्रयुज्यते।

अम्भःसम्भरितालवालवलयद्विश्वम्भरारम्भव-
द्रम्भास्तम्भविभञ्जकः करिवरः शेषाद्रिचूडामणे।
सारंसारमुरुप्रभं प्रादिमभागूरुद्वयं ते ह्रिया
सङ्कोचं मुहुरेति कन्दरमुखं पीत्वा विषं याति च॥

ति श्रीनिवासगुणाकरे कन्दरसदृशं मुखमित्यर्थे कन्दरमुखमिति प्रयुज्यते। अत्रैव -घटीकुचतटीलसत्तरपटीरपङ्काङ्कितम्' इति घटीसदृशकुचार्थे घटीकुचेति। अप्रमत्तेन

"नानाव्याकरणाभिज्ञबहुविद्वत्परिग्रहे।
शब्दासाधुत्वमाहुर्ये शाब्दिकांस्तान् न मन्महे॥"

ति संगिरमाणेन श्रीवेङ्कटनाथेन च

बिम्बाधरं विकचपङ्कजलोचनं ते लम्बालकं ललितकुण्डलदर्शनीयम्।
कान्तं मुखं कनककेतककर्णपूरं स्वान्तं विभूषयति देवपते मदीयम्॥

इति बिम्बाधरपदं देवनायकपञ्चाशति बहुव्रीहौ प्रयुक्तवताऽपि पादुकासहस्रे

अन्तः पुराणि समयेष्वभिगन्तुमेका रङ्गेशितुर्ज्ञपयसीव पदावनि त्वम्।
मुक्तांशुजालमिलनाद्रुचिरैः प्रवालैर्बिम्बाधरं सितविशेषयुतं प्रियाणाम्॥

इति तत्पुरुषे प्रयुज्यते। 'दर्पःस्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे' इति च सुप्रसिद्धः प्रयोगः। तथा च एषां प्रयोगाणां यदि साधुत्वं तर्हि उपमितसूत्रे अपूर्वविधेरङ्गीकार उचितः, न भामहादिसम्मतस्य नियमस्य। शास्त्रं विनैव यस्य विशेषणत्वं लोके प्रसिद्धम् तदेव सूत्रे विशेषणपदेन गृह्यते। उपमेयस्य धर्मिणो न विशेषणत्वं तथा प्रसिद्धमिति तेन सूत्रेणाप्राप्त एव समासः पुरुषव्याघ्रादिषु विधीयत इति नानेन विधिना सूत्रान्तरप्राप्तो यः कोऽपि समासो निवार्यते। तथा च व्याघ्रपदस्य व्याघ्रसदृशे लक्षणाङ्गीकारे लोकसिद्धमेव तस्य विशेषणत्वमिति विशेषणसूत्रेण प्राप्तं समासं कृत्वा व्याघ्रपुरुष इत्युपमाप्रयोगे न कश्चिद्दोषः। निषादस्थपतिप्रभृतिषु बाहुलकत्वेन कथञ्चित् समासोपपादनं कर्तव्यम्। अथवा निषादो वाऽन्यो वा स्थपतिर्भवितुमर्हतीति सामान्यरूपस्य स्थपतेर्व्यावर्तकतया निषाद इति विशेषणं भवत्येव। न चैवं पुरुषो वा अपुरुषो वा व्याघ्र इति लोके अनारोपस्थले प्रसिद्धं येन अपुरुषव्यवच्छेदकतया पुरुष इति विशेषणं स्यात्। तत्र पुरुषव्याघ्र इति प्रयोगे पुरुषसदृशो व्याघ्र इत्येवार्थो लभ्येत। न तु पुरुषाभिन्न इति। अतः सूत्रारम्भः। अथ आरोपस्थल एव गौणो व्याघ्रः पुरुषोऽपुरुषो वेति संशये तन्निवर्तकतया पुरुषपदं विशेषणं भवति। पुरुषाभिन्नो व्याघ्र इत्येव च बोध इति चेत् तर्हि नियमविधिरेवायमस्तु। स तु अनुपदं वक्ष्यमाणरीत्या व्याघ्राभिन्नः पुरुष इति तात्पर्येण व्याघ्रपुरुष इति समासव्यावृत्त्यर्थः। न तु व्याघ्रसदृशः पुरुष इति तात्पर्येण तादृशसमासव्यावृत्त्यर्थः।

### विशेषणविशेष्यभावः

एतेन

'विशेषणं विशेष्येणेति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः'

इति यद् वैयाकरणैरुच्यते तन्न रम्यमिति ज्ञापितम्। व्याघ्रपदस्य व्याघ्रसदृशे लक्षणया व्याघ्रश्चासौ पुरुषश्च व्याघ्रपुरुष इति समासस्य व्याघ्रसदृशश्चासौ पुरुषश्च व्याघ्रसदृशपुरुष इतिवदिष्टत्वेनावारणीयत्वात्। पुरुषव्याघ्र इत्यत्र पुरुषस्याभेदेनोत्तरपदार्थेऽन्वीयमानस्य विशेषणत्वेन विशेष्यत्वाभावात्। सादृश्यनिमित्ताभेदोपचारेण व्याघ्रपदेन व्याघ्रत्वेन पुरुषस्य धर्मिण एव बोध्यमानतया उत्तरपदार्थस्य विशेष्यत्वस्यैव

स्थितेर्विशेषणत्वाभावाच्च । नन्वालङ्कारिकैरेव पूर्वपदस्य प्राधान्यमुक्तम् । तेनोत्तरपदस्य विशेषणत्वं च ज्ञापितम् । उद्भटो ह्याह

श्रुत्या सम्बन्धविरहाद् यत् पदेन पदान्तरम् ।
गुणवृत्ति प्रधानेन युज्यते रूपकं तु तत् ॥

इति । गुणवृत्ति पदान्तरं प्रधानेन पदेन यद्युज्यते तद्रूपकमिति च इदं व्याचक्षते । तत्कथं तद्विपरीताभिधानमिति चेन्न । व्याख्याता प्रतिहारेन्दुराजेनैव 'ननु ज्योत्स्नाम्बुनेत्यत्र अम्बुनः प्राधान्यं ज्योत्स्नायाश्च गुणभावः । तथाहि ।' इति पूर्वपदार्थप्राधान्यमाक्षिप्य आक्षेपमुपपाद्य 'उच्यते । अत्र खलु द्वे अवस्थे विद्येते । एका तावत् ज्योत्स्नाया अम्बूकरणावस्था । अपरा तु अम्बुत्वमापादिताया ज्योत्स्नायाः सेकसम्बन्धरूपा' इत्यवस्थाद्वयमुक्त्वा यदा सादृश्येन निमित्तेन अम्बुशब्दः ज्योत्स्नावाची कल्प्यते सा प्रथमेति प्रदर्श्य

> यदा त्वसौ अम्बुशब्द आपादिताम्बुभावज्योत्स्नाभिधायी सन् सेकक्रियया समन्वयमापद्यमानः यदेतदत्र सेकसाधनत्वेनाम्बु उपयुज्यते तज्ज्योत्स्नैवेति ज्योत्स्नया विशेष्यते

इति द्वितीयामवस्थां दर्शयता समासे पूर्वपदार्थविशेषणत्वस्य उत्तरपदार्थविशेष्यत्वस्य च स्पष्टमेव निरूपितत्वात् । यदनेनोपरिष्टादुच्यते "तदा तस्य न रूपकावस्था" इति यच्च पूर्वावस्थानिरूपणावसरे उक्तं "तदा च तस्य प्रधानार्थानुरोधाद् गुणवृत्तित्वेन रूपकत्वमुक्तम्" इति तदुपरिष्टात् स्पष्टीकरिष्यते । मूलात् प्रतीतं विशेषणविशेष्यभावं कथञ्चिदुपपादयन्नयं प्रयुक्ते वाक्ये असदभिमतमेव तमभ्युपगच्छतीति तु साम्प्रतमवधेयोंशः । वस्तुतस्तु अम्बुशब्दस्य ज्योत्स्नायामुपचारकरणदशायां पदान्तरान्वयप्रसक्त्यभावात् 'यत्पदेन पदान्तरं युज्यते' इत्येतत तद्विषयतया नीयमानं न स्वरसं भवति । तेन 'गुणवृत्तिप्रधानेन' इतीदं एकपदं कृत्वा गुणवृत्तिप्रधानेन अभिधां न्यक्कृत्य गुणवृत्तिं प्रधानीकृत्य प्रवर्त्तमानेन पदेन सह पदान्तरं यद्युज्यते तद्रूपकमिति मूलार्थो वाच्य इति न किञ्चित् सङ्कटम् ।

अथ स्यात् जलददन्तिन इत्यत्र यदि जलदाभेदो दन्तिषु न तु दन्त्यभेदो जलदेषु तर्हि जलदरूपकमिदं स्यात् न दन्तिरूपकम् । दन्तिरूपकं चेदमिष्टम् ।

प्रकृतेषु जलदेषु अप्रकृतदन्तिरूपारोपणात्। अत्रोच्यते। उक्तं विस्मृत्य अगृहीत्वैव वा इदं पृच्छ्यते। न हि समासावस्थायां वाक्यावस्थायामपि वा आरोपः। ततोऽपि प्राक्तन्यां पदावस्थायामेव तु सः। तदैव च दन्तिपदं आरोपितदन्तित्ववद्वाचकं सम्पन्नम्। स आरोपितदन्तित्ववान् धर्मी। तथा च दन्तिरूपस्यैवान्यत्रारोपो न जलदरूपस्येति को विघातो दन्तिरूपकस्य का च प्रसक्तिर्जलदरूपकस्येति।

एवं च पुरुषव्याघ्र इत्यादौ पुरुषादेर्व्याघ्रादेश्च क्रमेण विशेषणत्वस्यैव विशेष्यत्वस्यैव च स्थितेः विशेष्यस्य पूर्वनिपातार्थं सूत्रारम्भ इत्येतन्न युक्तमिति सिद्धम्। यद्वात्र विशेष्यत्वं भूतपूर्वगत्याऽभिहितम्। व्याघ्रपदस्य व्याघ्रसदृशे लक्षणां कृत्वा व्याघ्रः पुरुष इति हि प्रयोगो भवति। तत्र व्याघ्रस्य विशेषणत्वं पुरुषस्य विशेष्यत्वं चास्त्येव। तेन विशेषणसमासं कृत्वा व्याघ्रपुरुष इति प्रयोगोपि साधुरेव। यदा तु व्याघ्रसदृशत्वाद् व्याघ्र एवेत्यभेद आरोप्यते पुरुषश्च आरोपितव्याघ्रत्ववति धर्मिणि अभेदेन विशेषणं भवति तदाऽस्य विशेष्यत्वाभावेऽपि सादृश्यप्रतीत्यवस्थायां स्थितं विशेष्यत्वमादाय अस्य पूर्वनिपातार्थं सूत्रमित्युच्यते। उभयोरपि धर्मिवाचित्वे अविशिष्टे आपेक्षिको विशेषणविशेष्यभावोऽनियमेन प्रसज्यते —पुरुषाभिन्नो व्याघ्रः पुरुषव्याघ्रः व्याघ्राभिन्नः पुरुषो व्याघ्रपुरुष इति। तत्र सादृश्य-प्रतीतौ यद्विशेष्यं तस्यैव पूर्वं निपातः समासे, न यत् तत्र विशेषणं तस्येति व्याघ्रा-भिन्नः पुरुष इत्यस्मिन्नर्थे व्याघ्रपुरुष इति समासो न युक्त इत्येतदर्थं सूत्रमिति वैयाकरणानामाशयः। उपमानोपमेयस्थल एव एवं नियमात् निषादस्थपतिरितिवत् स्थपतिनिषाद इति प्राप्नुवन् प्रयोगो नानिष्टः। तथा च दन्तिजलदाः कमलपादः बिम्बाधरः व्याघ्रपुरुष इत्येवमादिषु सत्यपि साधुत्वे उपमैव न रूपकम्। जलद-दन्तिनः पादकमलं अधरबिम्बं पुरुषव्याघ्र इत्यादिषु रूपकमेव नोपमेति सर्वमनाकुलम्। एतेन "बिम्बाधर इति वृत्तौ मध्यमपदलोपिन्याम्" इति सूत्रयता "बिम्बाधरः पीयते' इति प्रयोगो दृश्यते। स च न युक्तः। अधरबिम्ब इति भवितव्यम्, 'उपमितं व्याघ्रादिभिः' इति समासे सति। तत् कथं बिम्बाधर इति। आह। वृत्तौ मध्यमपदलोपिन्याम्। शाकपार्थिवादित्वात् समासे मध्यमपदलोपिनि सति बिम्बा-कारोऽधरो बिम्बाधर इति। तेन बिम्बोष्ठशब्दोऽपि व्याख्यातः" इति विवृण्वता च वामनेन वृथैव क्लेशोऽनुभूयत इति ज्ञेयम्।

सदृशलक्षणा

यद्यप्येवं सति मुखं चन्द्र इत्यत्र व्यासस्थले चन्द्रस्य विशेषणत्वात् सदृशलक्षणापत्त्या उपमैव भवितुमर्हति न रूपकमिति प्रसज्यते। भामहस्य चैवमेवाभिप्राय इति प्रतिभाति। स हि व्यस्तरूपकं न प्रदर्शयति। प्रत्युत

उपमानेन तद्भावमुपमेयस्य साधयन्।
यां वदत्युपमामेतदुपमारूपकं यथा॥

समग्रगगनायाममानदण्डो रथाङ्गिनः।
पादो जयति सिद्धस्त्रीमुखेन्दुनवदर्पणः॥

इति रूपकात् पृथगुपमारूपकं निरूपयन् असमासस्थलमुदाहरति। तत्र चोपमानाभेद-प्रत्यायनद्वारा उपमाप्रतीतिरेवोद्दिष्टेति मन्यते।

यत्र दृष्टान्तमात्रेण व्यज्येते साध्यसाधने।
तमाहुः शुद्धदृष्टान्तं तन्मात्राविष्कृतेर्यथा॥
भरतस्त्वं दिलीपस्त्वं त्वमेवैलः पुरूरवाः।
त्वमेव वीर प्रद्युम्नस्त्वमेव नरवाहनः॥
कथमेकपदेनैव व्यज्येरन्नस्य ते गुणाः।
इति प्रयुञ्जते सन्तः केचिद्विस्तरभीरवः॥

इति 'त्वं भरतः' त्वं दिलीपः' इत्यादिं शुद्धदृष्टान्तमभिदधानश्चायं एवमादिषु स्थलेषु न रूपकमिति स्वाभिप्रायं प्रकाशयति। यत्तु

'लक्षणाफलीभूततादृूप्यसंवेदनमादाय वैलक्षण्यं निर्बाधम्' 'भेद-घटितसादृश्यरूपाया उपमायाः' 'तिरोभूतभेदसादृश्यलक्षणस्य रूपकस्य' "भेदाकरम्बितसादृश्यविशिष्टस्य रूपके लक्ष्यत्वादुपमाव्यपदेशस्याप्रसक्तेः। 'सादृश्यमुपमा भेदे' इति तत्सिद्धान्तात्"

इत्यादि जगन्नाथेनोच्यते तदसभ्यं न रोचते। शशाङ्कवदनेति बहुव्रीहौ भामहादय उपमामाहुरित्युक्तम्। तत्र लक्षणाफलतया तादृूप्यप्रत्ययो यदि भवति तेन रूपकं च, तर्हि तदुक्तिविरोधः स्पष्ट एव। न च नवीनानामपि रूपकमत्र सम्मतम्। तच्चैवं

सति प्रसज्यते। भेदाकरम्बितं सादृश्यमिच्छता नूनं उष्णत्वाकरम्बितं वह्नित्वमिष्यते। ननु 'उपमैव तिरोभूतभेदा' इति दण्डिनैवेदमिष्टम्। उपमा हि सादृश्यमेव। तस्या एव तिरोभूतभेदत्वमुच्यते। न। उपमानोपमेयधर्मिणोः साधारणधर्मान्वयप्रयुक्तं इवादिशब्दवाच्यं सादृश्यमुपमा। तत्र भेदतिरोभावेऽभिहिते तदधीनस्य धर्मसाधारण्यस्य एतदधीनस्य सादृश्यस्य च तिरोभावोऽप्यभिहित एव। एतावति तिरोहिते अवशिष्टमुपमानमुपमेयं च। तयोर्भेदतिरोभावाभिधानेन अभेदप्रादुर्भावोऽपि प्रत्यायितः। तथा च 'उपमोनेन यत्तत्वमुपमेयस्य' 'तद्रूपकमभेदो यः' 'उपमानोपमेययोरभिदा' इति यदन्यैरुक्तं तदेवानेनापीत्यवधेयम्। उपमारूपकयोरनुवर्तमानोऽयमंशः व्यावर्तमानोऽयमिति विवेकाय तु विलक्षणा वाचोयुक्तिरिहाश्रिता। 'सादृश्यमुपमा भेदे' इत्यत्रापि न भेदविशिष्टं सादृश्यं नाम किञ्चिद् विवक्षितम्। अनन्वयव्यावृत्तिमात्रं हि भेदग्रहणफलम्। सादृश्यमुपमेत्युक्ते इन्दुरिन्दुरिवेत्यत्रापि सादृश्यनिबन्धनादतिव्याप्तिः। तत्परिहाराय वस्तुत उपमानोपमेययोर्भेदे सति सादृश्यमुपमेति लक्षणमुच्यते। न तु तावता भेदोऽपि लक्ष्ये शब्दवृत्त्या उपस्थाप्य इति सिध्यति। प्रमाणान्तरलभ्यस्य भेदस्य उपलक्षणतयैव 'अनन्वितं सादृश्यमनन्वयः। अन्वितम् उपपन्नं सादृश्यमुपमा' इत्येवं विवेकार्थतयैव, लक्षणे निवेशनात्। अतः भेदोपलक्षितं सादृश्यमुपमा उपमानोपमेययोरभेदो रूपकमित्येवानयोः स्वरूपम्। न च—मुखं चन्द्र इत्यत्र सादृश्यप्रत्ययस्य सर्वथा विरहे अभेदारोपमात्रेण आयुर्घृतमित्यादाविव चमत्कारानुदयेन रूपके तत्प्रत्ययस्यावश्यं वाच्यत्वात् तत्रोपमात्ववारणाय उक्तरीत्या भेदाकरम्बितसादृश्यस्याप्रामाणिकत्वेन लक्षणीयत्वायोगेऽपि आरोपिताभेदयोः सादृश्यं रूपकमिति तत्स्वरूपं शिक्षयित्वा सादृश्यमात्रस्य लक्षणागम्यत्वमभ्युपगम्यते। सामानाधिकरण्येनाभेदः, वस्तुतो धर्मिणोर्भेदात् तस्य आरोपितत्वं चावगम्यत इति न तस्य शाब्दत्वमिति वाच्यम्।

> "एवमभेदप्रधानेष्वपि रूपकापह्नुतिपरिणामभ्रान्तिमदुल्लेखादिषु भेदप्रधानेषु दृष्टान्तप्रतिवस्तूपमादीपकतुल्ययोगितादिषु चमत्कारिषु तन्निष्पादकतयाऽवस्थितस्यापि सादृश्यस्य चमत्कारिताविरहेण नास्त्युपमालङ्कृतित्वम्।"

इति तत्रभवतैव रूपके सादृश्यस्य तन्निष्पादकतयाऽवस्थितिमात्रं न चमत्कारित्व-

मित्युक्तत्वेन चमत्काराय लक्षणया सादृश्यप्रतीतेरनपेक्षितत्वात्। तर्हि आयुर्घृतमित्यत्र कुतो न चमत्कार इति चेत् सादृश्यस्याचमत्कारित्ववादिना तत्रभवताऽपि समाधेयमेतत्। अथाप्युच्यते। उपमानोपमेयभावविरहात्। सादृश्यनिबन्धनोऽभेदप्रत्ययश्चमत्कारी। न सादृश्यं साक्षात्। नापि तन्निरपेक्षं अभेदप्रत्ययमात्रम्। अतिविमर्दस्त्वत्र वैरस्यावहः। 'अन्योन्याश्रयो नाशङ्कनीयः। सकलसिद्धेः कल्पनामयत्वेन। कल्पनायाश्च स्वप्रतिभाधीनत्वात्।' इति भवदुक्तरीत्यैव तु सन्तोष्टव्यम्। एतेन 'भेदाभेदतुल्यत्वे उपमा' इति वदतः सर्वस्वकारस्यापि दत्तमुत्तरम्। वास्तवस्य भेदस्य अनपह्नुतस्य प्रतीयमानत्वेन, अभेदस्य वस्तुवृत्त्या अविद्यमानत्वात् आरोपविरहाच्चाप्रतीयमानत्वेन च उभयोस्तुल्यत्वासम्भवात्। यत्त्वत्रोपष्टम्भकतया "यदाहुः—'यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः' इति" इति किमपि वचनमुद्धृतं तत् तद्भिन्नत्वे सति तद्गतधर्मवत्त्वं सादृश्यमिति यदाहुस्तदेव संवदतीति भेदाभेदतुल्यत्वस्य नैवोपष्टम्भकं भवितुमर्हति।

एवं च मुखं चन्द्र इत्यत्र विशेषणत्वेन चन्द्रसदृशलक्षणायां सत्यां उपमैव भवितुमर्हति न रूपकमिति प्रसङ्गो दुष्परिहरः—

### व्यस्तरूपकम्

तथापि व्यासेऽपि रूपकमङ्गीकुर्वतां दण्डिरुद्रटादीनामयमभिप्रायः। पदं तावत् मुख्यार्थसदृशं यथा सदृशत्वेन बोधयितुं शक्नोति तथाऽऽरोपितशक्यतावच्छेदकरूपेणापि। तत्र मुखं चन्द्र इत्यत्र चन्द्रपदं केन रूपेण चन्द्रसदृशमाहेति निरूपणीयम्। अनेन हि वाक्येन मुखे कश्चन विशेषोऽभिव्यञ्जयितुमिष्यते यः प्रकृतस्य रसस्य परिपोषाय कल्पेत। तत्र सदृशप्रत्ययाभिव्यङ्ग्याद् विशेषात् ताद्रूप्यप्रत्ययाभिव्यङ्ग्यो विशेषो रसं परिपोषयतितरामिति सहृदयानां सुविदितमेतत्। एवं रसप्रधाने काव्ये तदनुरोधेन ग्रहणत्यागनियमस्थितेः उपमाफलां वृत्तिं परित्यज्य पदस्य रूपकफला वृत्तिः परिग्राह्येति रूपकमेवात्र भवति नोपमा। न च चन्द्रमुखी शशाङ्कवदनेत्यादिषु तुल्यः प्रसङ्गः। समासे चन्द्रादिपदस्य उपसर्जनतया न्यक्कृतत्वेन अतिशयितार्थविवक्षाप्रतीतेः सन्देहाभावेन उक्तन्यायाप्रवृत्तेः। न च यस्ताद्रूप्यप्रत्ययविवक्षया तथा प्रयुञ्जीत तस्य तत्र रूपकं स्यादेवेति वाच्यम्। कामं तस्य भवतु। श्रोतुस्तु सहृदयस्य नैव भवेत्। स हि प्रयुक्तस्य शब्दस्य न्यायसंस्कृतस्य योऽर्थस्तमेव

ग्रहीष्यति । नेतरम् । तत्र इदं मे रूपकं विवक्षितमिति साक्षात् कथयन्नपि प्रयो 'कुकविरसि योऽभिमतार्थप्रकाशानुगुणं शब्दप्रयोगं न जानीषे' इति सहृदयैर लभ्येत । शक्यं हि मुखचन्द्रा वदनशशाङ्केति प्राधान्यं कृत्वा प्रयोक्तुमिति । व्यासे ताद्रूप्यप्रत्ययमात्रेऽभ्युपगते समासेऽपि तथेति ऐकरूप्यमपि सम्पन्नम् । अर्थ चन्द्रत्वेन प्रतीतावपि आरोपितार्थवृत्तित्वात् चन्द्रपदं गौणमेव न मुख्यम् ।

नन्वेवमपि समासे मुखाभेदश्चन्द्रे व्यासे तु वैपरीत्यमित्यस्त्येव अन वैरूप्यमिति चेन्न । व्यासेऽपि सर्वत्र वैपरीत्यविरहात् ।

मुखं चन्द्रस्तेऽयं शिशिरमृदुलालोकमहसा
सुधादायी लोकं विगलदशनायं कलयति ।
दरं दृष्टः सद्यः कलयति च कान्तेऽतिविपुलं
समन्तादुद्वेलं मम कुतुकपाथोनिधिमपि ॥

इत्यत्र चन्द्र एव मुखाभेददर्शनात् । यत्त्वत्र कवेरनवहितत्वं वचस्तुष्यातत्त्वे उक्त सामञ्जस्यार्थमिति क्लिष्टं किमपि योजनान्तरं च दर्शितं तदादर्तुं न शक्यमिति भाति तथाहि । मुखं चन्द्र इत्येतवन्मात्र वाक्ये सति प्रकृतत्वात् प्राप्तं मुखमुद्दि अप्राप्तश्चन्द्राभेदो विधीयत इति वाच्यत्वात् चन्द्राभेदबोधोऽवर्जनीयः । यदा विधेयान्तरलाभात् अभेदस्यानुवादमात्रम् तदा विधेयान्वयानुरोधेन उपमानाभेदो उपमेयाभेदो वा भासते । उदाहृते श्लोके चन्द्रान्वयिनो विधेयस्य सत्त्वात् मुख भेदश्चन्द्रे । 'समग्रगगनायाममानदण्डो रथाङ्गिनः' इति पूर्वोदाहृते भामहश्लो जयतीति उपमेयपादान्वयिनो विधेयस्य सत्त्वात् तत्र मानदण्डादिरूपोपमानाभेदः यदि तु मुखं चन्द्रस्तेऽयमित्यत्र मुखं ते चन्द्र इत्येकं वाक्यम्, अयं शिशिरेत्याद्य परमिति स्यात् तदाऽत्रापि चन्द्राभेद एव । मुखचन्द्र इति समासे त्वभेदस्यानूद्य मानस्य स्थानवशेन विशेषणतया प्रतीतमुखप्रतियोगिकत्वनियमः । एवं स्थिते वाक्यस्थल एव वैरूप्यस्य सत्त्वात् तस्य च प्रामाणिकत्वेन सह्यत्वात् वाक्यरूपकस्थल विशेषवैरूप्यं समासस्थले भवतीत्येतन्न दोषाय । यत्तु

"उभयत्रापि वस्तुतश्चन्द्राभेद एव संसर्गः । क्वचिदनुयोगित्वमुखः । क्वचिच्च प्रतियोगित्वमुखः । विशेषणविशेष्यभाववैचित्र्यात् । न तु मुख-

चन्द्र इत्यत्र मुखाभेदः संसर्गः । तथा सति चन्द्ररूपकानापत्तेः । मुखरूपकापत्तेश्च । स्वप्रतियोगिकाभेद एव विशेषणसंसर्गः न तु स्वानुयोगिकाभेद इति तु दुराग्रहः ।"

इति जगन्नाथ आह तत्रापि वयं विप्रतिपन्नाः । संसर्गो यस्य स प्रतियोगी । स यत्र सोऽनुयोगीति लोके प्रसिद्धिः । विशेषणस्यान्वयो विशेष्ये इत्यभ्युपगम्य तत्र भासमाने संसर्गे विशेषणमनुयोगीति कथ्यमानं कथमिदं श्रद्धेयम् । उपमानोपमेययोः प्रतियोग्यनुयोगिभावे स्थितं वैरूप्यमेवं संसर्गस्य प्रतियोगित्वानुयोगित्वमुखत्वे स्थापितम् । न तु परिहृतम् । अन्यथा चन्द्ररूपकानापत्तिः मुखरूपकापत्तिश्चेति तु अकारणकलास इति प्रागेवावेदितम् । न हि संसर्गतया भासमानोऽयमभेदो रूपकस्य शरीरम् । किन्तु पदावस्थायामेव प्रकृते उपमेयधर्मिणि य आरोप्यते चन्द्रत्वात्मा चन्द्राभेदः सः । एवमारोपितं चन्द्रत्वमेव चन्द्रपदेन सामान्यतो गृहीते उपमेयधर्मिणि बोध्यत इति रूपकशरीरभूताभेदबोधकत्वमस्यैव । स धर्मी मुखरूप इति तु मुखपदसमभिव्याहारात् सिध्यति । अत एव ह्यवस्थाद्वयं परिकल्पयता अवहितेन प्रतिहारेन्दुराजेन प्रथमावस्थायामेव रूपकमित्युक्तम् । प्रथमावस्थेयं पदावस्थैव । अथवा 'पद्मानीव पद्मानि चन्द्र इव चन्द्र' इति भोजोक्तरीत्या सादृश्यानुसन्धानेन क्रियमाण आरोपोऽपि वाक्याभिलप्य एवास्तु । तथाऽपि आरोपे वृत्ते यद् वाक्यं प्रयुज्यते तत्र आरोप्यमाणवाचकपदेनैव आरोपितोपमानाभेद उपमेयधर्मी अभिधीयत इति वाक्ये तेन पदेनैव रूपकाभिव्यक्तिः । वाक्यप्रमेयं तु उपमेयविशेषः क्रियासम्बन्ध इत्याद्यन्यदेव । पदेन सिद्धवत् प्रत्याय्यमानस्य आरोपस्य प्रापकमारोपवाक्यमाक्षिप्यत इति न एकस्य वाक्यस्य व्यापारद्वयम् । तेन 'एकस्मिन् वाक्येऽवस्थाद्वयाप्रतिपत्तेः प्रतिहारेन्दुराजव्याख्यानमस'दिति दूषयन् विवृतिकारो न सम्यग्वादी । यदप्यनेन

उपसर्जनोपमेयं कृत्वा तु समासमेतयोरुभयोः ।
यत्तु प्रयुज्यते तद्रूपकमन्यत् समासोक्तम् ॥

इति उपमेयोपसर्जनत्वाभिधायिरुद्रटश्लोकोदाहरणपुरःसरं प्रतिहारेन्दुराजेनोपपादितमुपमानप्राधान्यं तथैवाशङ्क्य समाधित्सया

"तच्छाब्दप्रक्रमानुसारेण । शाब्दे हि क्रमे सिंहो माणवक इत्यादौ सिंहादिरूपावच्छादितो माणवकादिरप्रधानभूतः प्रतीयते । वास्तवनयानुसारे तूक्तरीत्याऽस्य गुणवृत्तित्वम् । अत एव शाब्दनयानुसारेणासिच्यतेति क्रिया समुचिता ।

इति किञ्चिदुक्तम् । तत्र किमभिसंहितमिति न ज्ञातुं शक्यते । ज्योत्स्नाम्बुनेत्यत्र अम्बुनः शाब्दमेव प्राधान्यं तस्य प्रतिपिपादयिषितम् । तच्चेदभ्युपगतं वृथैव संरब्धं तत्खण्डने । अथ नैतदभ्युपगतम् । शब्दतः तत्प्राधान्यप्रतिभासेऽपि तदुपेक्ष्य ज्योत्स्नाया एव प्राधान्यं कृत्वा तात्त्विकी शाब्दप्रतिपत्तिरुपपादनीयेत्यभिप्रायः तत्र यद्वक्तव्यं तत्सर्वं वयमुक्तपूर्विणः । "तेन ज्योत्स्ना गुणवृत्तिः ।" इति शङ्कामुत्थाप्य "नैतत् । यतोऽसिच्येतेत्यनेन व्याप्तिर्लक्ष्यते" इति समादधताऽनेन प्रतिहारेन्दुराजस्याभिप्रायो नैव गृहीत इत्यस्तां तावदेतत् । इदं तु स्थितं यत् विध्यनुवादानुरोधेन विशेषणविशेष्यभावविपर्ययेऽपि सर्वत्र उपमानपदमेव उपमेयधर्मिणि तदभेदरूपं रूपकं समर्पयतीति । एवं च 'सौजन्यचन्द्रिकाचन्द्रो राजा' इत्यत्र चन्द्रिकारूपकेण चन्द्ररूपकनिष्पत्तौ न कश्चित् प्रतिबन्धः । उदाहरणान्तरेष्वप्येवं द्रष्टव्यम् । न चात्र उपमानपदमात्रेण तदभिन्नोपमेयप्रतीतौ अतिशयोक्तिः स्यान्न रूपकमिति शङ्क्यम् । उपमेयस्य विशिष्य अवधारणं यत्र आर्थं तत्रैवातिशयोक्तिप्रसरात् । यत्र शब्दत एव तत् तत्र तत्प्रसक्त्यभावात् । शब्दोपात्तोपमेयकस्योपमानाभेदस्य रूपकत्वात् । न चात्रैवं सति रूपकस्यातिशयोक्तेश्च परस्परं शब्दवैचित्र्यमात्रभेदप्राप्तेः ऽर्थालङ्कारत्वं न स्यादिति वृत्तिवार्तिकरीत्या शङ्कनीयम् । इवाद्युपादाने उपमा तदभावे रूपकम् । एकवाक्यत्वे निदर्शना वाक्यभेदे दृष्टान्त इति शब्दवैचित्र्यादेवार्थालङ्कारवैचित्र्यस्य बहुधा इष्टत्वात् । तत्र सर्वत्रार्थानुषङ्गोऽप्यस्तीति चेत् प्रकृते किं नास्ति । प्रकृतस्य विषयस्य तत्त्वेन एकत्र शाब्दं भानमपरत्र नेति । न च मुखं चन्द्र इत्यत्र मुखोद्देशेन चन्द्राभेदविधौ अज्ञातज्ञाप्यस्य चन्द्राभेदस्य वाक्यप्रमेयत्वमेव न पदगम्यत्वमिति वाच्यम् । चन्द्रपदमुख्यार्थग्रहणे तदभेदस्य मुखे बाधात् अन्वयबोधानुपपत्तेः अन्वयात् पूर्वमेव आरोपसम्बन्धेन चन्द्रत्वविशिष्टकिञ्चिद्वाचि इदं पदमिति आरोपितार्थवृत्तित्वरूपगौणीज्ञानेन चन्द्रत्वेन रूपेण सामान्यतः प्रकृतोपमेयधर्म्युपस्थितेरवश्यं वाच्यतया आरोपिततादूप्यप्रत्ययस्य वाक्या-

नपेक्षत्वात् । चन्द्रत्वेनोपमेयधर्मिणः प्रतीतस्य च मुखरूपत्वात्मको यो विशेषस्तत्प्रत्ययस्य वाक्यजन्यत्वात् । न च चन्द्रपदं स्वार्थमेवास्तु । आहार्याभेदस्तु संसर्गः । तथा च वाक्यगम्यमेव रूपकमिति किं न स्यादिति वाच्यम् । मुखचन्द्र इति समासे चन्द्रस्योपमेयेऽन्वयाभावेन संसर्गविधया रूपकसिद्धेर्दुर्वचत्वात् गौण्या आवश्यकत्वे विग्रहेऽपि तदङ्गीकारस्यैवोचितत्वात् । आहार्याभेदस्य चन्द्रप्रतियोगिकाभेदप्रकारकाहार्यज्ञानविशेष्यत्वरूपत्वेन भेदसंसर्गत्वाच्च । न ह्यभेदघटितत्वमात्रेण अभेतसंसर्गता । राजा पुरुष इत्यत्रापि स्वाभिन्नस्वामिकत्वसंसर्गेण राज्ञः पुरुषान्वयापत्तेः । यत्तु एतदापत्तिपरिजिहीर्षया जगन्नाथेन सादृश्यस्य रूपकशरीरघटकत्वं यत्नेन साधितं तदुपमाप्रकरणे तेनैव प्रत्युद्धृतमित्येष एव गौणीमनिच्छतां निरसनमार्गः । 'मीनवती नयनाभ्याम्' इत्यत्र मीनपदमेव आरोपितमीनत्ववद्वाचि रूपकसमर्पकम् । नयनाभ्यामिति तु तृतीयाया अभेदार्थत्वे मीनान्वयि । हेत्वर्थत्वे मतुबर्थसम्बन्धान्वयि । एतदनुरोधेनैव च बोधोऽत्र वाच्यः । न तु मीनाभिन्ननयनवतीति । प्रमाणाभावात् गौरवात् क्वचिदपि केवलरूपकस्य एवमाकारत्वादर्शनाच्चेति ।

आरोपितार्थवृत्तित्वमुपमानपदस्य यत् ।
रूपकोपनिषत् सेति जानन् मुह्यति न क्वचित् ॥

इत्थं

शब्दानुशासनवशेन च युक्तितश्च
पादारविन्दमिति रूपकमात्रमेतत् ।
नैवोपमेति सुनिरूपितमत्र यत्तु
नव्या वदन्ति तदथो परिशीलयामः ।

साधकबाधकनैरपेक्ष्यम्

उपमितसमासे उपमैवेति विपर्यस्तमतेर्वामनस्य, वरेन्दुरित्युपमा रूपकं वेति सन्दिग्धबुद्धेरुद्भटस्य च, उपमितसमास एव रूपकमेव चेति इयता प्रबन्धेन साधितत्वात् अनादरणीयत्वं प्रकाशितम् । एतेन, जलददन्तिनः पदपङ्कजम् वरेन्दुरित्यादिषु श्रवणमात्रेण रूपकं प्रकाशते प्रतितिष्ठति च । न त्वस्य साधकान्तराधीना सिद्धिः बाधकवशाद् बाधः उभयाभावे सन्देहो वा भवतीत्यप्युक्तं भवति । तथाहि ।

सरत्नविरुदाङ्गदं तव नमन्ति पादाम्बुजम्

इत्यत्र "रत्नविरुदाङ्गदसम्बन्धः पादे सम्भवतीत्युपमानुगुणतां भजते । अम्बुजे न सम्भवतीति न रूपकं प्रत्यनुगुणता" इत्युपमापरिग्रहे साधकमस्तीति विद्याधरः । सर्वमिदं तदा संगच्छेत यदि पाद इति अम्बुजमिति च भिन्नाविमौ द्वावर्थौ स्याताम् । एकः पुनरत्रार्थो धर्मद्वययोगि । स्वाभाविकं पादत्वं आरोपितमम्बुजत्वमिति धर्मद्वयमपीदं एकपादधर्मिवर्ति । तत्र पादत्वेन बिरुदाङ्गदसम्बन्धं लभते । अम्बुजत्वेनोत्तंसनक्रियासम्बन्धमिति न बिरुदाङ्गदसम्बन्धवशाद्रूपकमपैति । नाप्यात्मनः सिद्धये उत्तंसनक्रियासम्बन्धमुखं निरीक्षते । एतेन 'मुकुलितनयनैर्मुखारविन्दैः' इत्यत्र नयनसम्बन्धो रूपकस्य बाधकमिति मल्लिनाथोक्तमपि प्रत्युक्तम् । अत्र

अकस्मादेव ते चण्डि स्फुरिताधरपल्लवम् ।
मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः ॥

मञ्जरीकृत्य घर्माम्भः पल्लवीकृत्य चाधरम् ।
नान्यथाकृतमत्रास्यमतोऽवयवरूपकम् ॥

वल्गितभ्रु गलद्धर्मजलमालोहितेक्षणम् ।
विवृणोति मदावस्थामिदं वदनपङ्कजम् ॥

अविकृत्य मुखाङ्गानि मुखमेवारविन्दताम् ।
आसीद् गमितमत्रेदमतोऽवयविरूपकम् ॥

इति दण्डिना निरूपितयोरवयवावयविरूपकयोरवहितचेतसां न सन्देहः कोऽपि भवितुमर्हति । अनुपपन्नैवेयं प्राचामुक्तिरिति तु साहसम् । उपपत्तेरुक्तत्वात् । यत्तु मल्लिनाथः काव्यव्याख्यानेषु बाधकान्तरं साधकान्तरं वा रूपकस्य उपमाया वा दर्शयति तदपि वस्तुतो न तथा । स हि

विधिसमयनियोगाद् दीप्तिसंहारजिह्मं
शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥

इति किरातार्जुनीयप्रथमसर्गान्त्यश्लोकव्याख्याने एवमाह—

"अगाधे दुस्तरे। आपत् पयोधिरिवेत्युपमितसमासः। दिनकृतमिवेति वक्ष्यमाणानुसारात्। तस्मिन् आपत्पयोधौ। मग्नम्। सूर्योऽपि सायं सागरे मज्जति परेद्युरुन्मज्जतीत्यागमः।....रिपुस्तिमिरमिवेति रिपुतिमिरम्। ....।"

इति। आपत्पयोधौ रिपुतिमिरमिति समस्तपदद्वये नवीनरीत्या उपमा रूपकं वेति सन्देहे उपमेति मल्लिनाथो निश्चिनोति। तत्र हेतुः अस्मिन्नेव वाक्ये दिनकृतमिवेति उपमानिबन्धनमित्याह। तेनायं पदद्वयेऽपि उपमितसमासं तच्चोपमाप्रयोजकं मन्यत इति स्पष्टम्। वाक्यस्यैकदेशे दृष्टा उपमा अन्यत्र रूपकस्याननुगुणेत्यभिप्रायः। अपरस्तु व्याख्याता चित्रभानुर्नाम न परं रूपकमभ्युपैति अपि तु तन्मूलत्वेन व्यङ्ग्यार्थविशेषलाभमप्युपपादयति।—

"अगाधे अदृष्टतले गम्भीरे। आपत्पयोधौ व्यसनसमुद्रे। मग्नम् अवपतितम्। मज्जनाधिकरणत्वोपपत्तये दुस्तरत्वोपपत्तये च आपदः पयोधित्वं रूपितम्। न पयोधिसादृश्यमात्रं कृतम्। ....रिपव एव तिमिरम्। रिपूणां तिमिरत्वेन रूपणं कृतं न तिमिरसादृश्यं कृतम्। तेन मलीमसास्तमोरूपास्ते रिपव उच्छेद्या एव, न जातु सन्धेया जेया वेति द्योत्यते।........ दिनकृतमिवेति दिनकरेण सादृश्यमुक्तं न तु तत्त्वं रूपितम्। तेन दिनकरयुधिष्ठिरस्य भेदप्रतीतेः तदुदयस्य पुनरस्तमयापर्यवसायित्वं प्रतीयते।"

इति। उक्ताभिरुपपत्तिभिः पादारविन्दादिषु उपमा दुर्वचेति स्थिते, अभिज्ञे रसिके व्याख्यातरि चित्रभानौ एकत्र सत्यामप्युपमायां अन्यत्र रूपकमेव कृत्वा श्लोकं व्याचक्षाणे च अत्र मल्लिनाथकृतं रूपकबाधनं सर्वथा न शक्यमभ्युपगन्तुम्। न च कविरेवमेकत्र उपमारूपकयोर्मिश्रणं कुर्वन् प्रमत्त इति युक्तं वक्तुम्। चिरादेवं सम्प्रदायानुवृत्तिदर्शनात्। यथा श्रीमति रामायणे—

सोदर्यघातापरगात्रवालः सन्तापहस्ताक्षिशिरोविषाणः।
एनोमयो मामभिहन्ति हस्ती दृप्तो नदीकूलमिव प्रवृद्धः॥

अत्र एनोमयो हस्तीति व्यासदर्शनात् उपमितसमासाश्रयणेन उपमासम्पादनदन्धनं निरवकाशमित्यवधेयम् । यथा च भारवेरत्यन्तमर्वाचीनस्य श्रीवेङ्कटनाथस्य दयाशतके—

वृषगिरिकृष्णमेघजनितां जनितापहरां
त्वदभिमतिं सुवृष्टिमुपजीव्य निवृत्ततृषः ।
बहुषु जलाशयेषु बहुमानमपोह्य दये
न जहति सत्पथं जगति चातकवत् कृतिनः ॥

अत्रापि त्वदभिमतिं सुवृष्टिमिति व्यस्तरूपकम् । कृष्णमेघेति रूपकं चेत् समस्तम् । चातकवत् कृतिन इत्युपमा । अपि च मल्लिनाथेनैव वाक्यस्यैकदेशे उपमायां सत्यामेकदेशान्तरे रूपकं बहुषु स्थलेष्वङ्गीकृतम् । यथा—

पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ ।
अथ नागयूथमलिनानि जगत् परितस्तमांसि परितस्तरिरे ॥

इति माघे नवमसर्गश्लोकस्य व्याख्याने—

"अत्र यद्यपि नागयूथमलिनानीत्युक्तानुशासनसिद्धोपमानुसारात् पतङ्गमृगराजीत्यत्रापि उपमितसमासाश्रयणेन उपमैवोचिता तथापि तदु(रुङ्?)त्प्रेक्षायाः पतङ्गेऽसम्भवात् सिंहे सम्भवाच्च रूपकमेव युक्तम् ।"

इति ।

वारिपूर्वमखिलासु सत्क्रियालब्धशुद्धिषु धनानि बीजवत् ।
भावि बिभ्रति फलं महत् द्विजक्षेत्रभूमिषु नराधिपोऽवपत् ॥

इति चतुर्दशसर्गश्लोकव्याख्याने—

"अत्र बीजवदित्युपमानम । तेन तुल्यमिति तुल्यार्थे वतेर्विधानात् । तथापि वापक्रियायोगात् द्विजक्षेत्रेति रूपकसमासः ।"

इति ।

महतः कुकुरान्धकद्रुमानतिमात्रं दवदद् दहन्नपि ।
अतिचित्रमिदं महीपतिर्यदकृष्णां पृथिवीं करिष्यति ॥

इति षोडशसर्गश्लोकव्याख्याने

कुकुराश्च अन्धकाश्च यादवभेदाः तानेव द्रुमान् ।

इति । अत्र प्रथमश्लोके नागयूथमलिनानीत्युपमाऽनुरोधेन पतङ्गमृगराजीत्यत्र उपमा यद्यपि युक्ता तथापि रोषहेतुत्वोत्प्रेक्षानुरोधेन रूपकमित्याह । तथाऽपि सिंहपतनस्य तमोव्यापनस्य च कः सम्बन्धः । एवं द्वितीयश्लोके धनवापयोः तृतीये महीपतिदाहयोश्च नास्ति सम्बन्धः । अथापि नागयूथमलिनानि बीजवत् दववदिति सादृश्यमात्रेण उपमानधर्मोपचार उपमेये भवितुमर्हतीति वाच्यम् । सादृश्यप्रतिपत्तौ हि रूपकप्रतिपत्तिरयत्नसिद्धा सहृदयानाम् । तेन कवयो रूपकनिबन्धेऽपि तदुपपादकतया उपमामपि तत्रैवांशतो घटयन्तीति नैतदपह्नवार्हम् । एवं च एषु स्थलेषु अंशत उपमा अंशतो रूपकमित्यवश्यमङ्गीकर्तव्ये किमिति स्थलान्तरेषु उपमानुरोधेन रूपकविनाशने यत्नः । अनयोर्हि न मनागपि विरोधः । प्रत्युत मिथ आनुकूल्यमेव ।

एतेन

**वारिधेरिव कराग्रवीचिभिर्दिङ्मतङ्गजमुखान्यभिघ्नतः ।**
**यस्य चारुनखशुक्तयः स्फुरन्मौक्तिकप्रकरगर्भतां दधुः ॥**

इति चतुर्दशसर्गश्लोके

" कराग्राणि वीचय इवेत्युपमितसमासः । वारिधेरिवेति लिङ्गात् । चारुनखाः शुक्तय इव । पूर्ववदुपमितसमासः । उपमालङ्कारः ।"

इत्युपमाप्रतिपादनं पूर्वोदाहृतभारविश्लोके तत्प्रतिपादनं च गतानुगतिकत्वमात्रेण । यथा बीजसादृश्यमात्रेण धनानां वापक्रियायोगः यथा दवसादृश्यमात्रेण महीपतेर्दहनक्रियायोगः तथैव वारिधिसादृश्यमात्रेण यस्येति यच्छब्दोपात्तस्य पुरुषस्य वीचिशुक्तियोगो भवतीति किमत्र प्रमाणन्यायसिद्धरूपकभञ्जनेन साध्यम् । प्रत्युत मौक्तिकप्रकरगर्भत्वयोगाय रूपकमेवापेक्षितम् । भारविश्लोकेऽपि दिनकृत्साम्यमेव पयोधिमज्जनस्य तिमिरनिरसनस्य चोपपादनाय पर्याप्तमिति न तत्रापि तद्युक्तम् । एतत्तुल्य एव

**प्रलयमखिलतारालोकमह्नाय नीत्वा**
**श्रियमनतिशयश्रीः सानुरागां दधानः ।**

गगनसलिलराशिं रात्रिकल्पावसाने
मधुरिपुरिव भास्वानेव एकोऽधिशेते ॥

इति रम्यरम्यो माघश्लोक इति तद्व्याख्याने यदुक्तं मल्लिनाथेन

"अखिलतारा लोको लोक इव । रात्रिः कल्पावसानं कल्पान्त इव ।
....गगनं सलिलराशिरिव ।.... अत्र मधुरिपुरिवेति वाक्यगतोपमैव
समासगतोपमानां प्रसाधिकेति सर्वत्रोपमितसमासाश्रयणमेवोचितम् ।"

इति तदुपेक्षणीयं भवति । (रात्रिरित्यादौ "रात्रिः कल्प इव तस्यावसाने" इति
पाठेन भाव्यमिति च भाति)। सन्देहविषौषधिनाम्नो माघव्याख्यानस्य कर्ता
मल्लिनाथात् प्राचीनो वल्लभदेवः पुनः

श्रीसूर्यः.... आकाशसमुद्रमेकोऽधिवसति । कु । रात्रिकल्पः तस्यावसाने
अन्ते । क इव मधुरिपुरिव ....

इति यथास्थितमेव व्याचख्यौ । तस्मादेकदेशान्तरवर्तिन्युपमाऽपि न रूपकविरोधि-
नीति ज्ञेयम् । एतेन

पादपादुपहृता रघूद्वहादालवालमिव पीठमाश्रिता ।
अभ्यपेचि भरती तपोवनैः पारिजातलतिकेव पादुके ॥

इत्यत्र प्रथमपादेऽपि इवशब्दमाकृष्य उपमैवेति यद् व्याख्यायते सोऽयमस्थान एव
प्रयास इति मन्तव्यम् । रघूद्वहात्पादपादिति रूपकस्यैव पारिजातलतिकेवेत्युपमोप-
पादकत्वसम्भवेनोपमाया अनपेक्षितत्वात् ।

जय त्रिभुवनपते त्वं दर्शिताभीष्टदानः
सह सरसिजवासामेदिनीभ्यां वशाभ्याम् ।
नलवनमिव मृद्नन् पापराशिं नतानां
गरुडवरदन्तो गन्धहस्तीव दीव्यन् ॥

इत्यत्र दानशब्देन एकेनोपात्तयोर्वितरणमदजलयोः श्लेषप्रतिपन्नाभेदयोः यथा उप-
मानोपमेयत्वं तथैव हि सरसिजवासामेदिन्योर्वशयोश्च सामानाधिकरण्यप्रतिपन्नाभेदयो-

रपि तत् सम्भवतीति किं नाम इवशब्देन कार्यम् । वृषगिरिकृष्णमेघजनितामिति पूर्वोदाहृतश्लोके अवयविनि चातकवदित्युपमाया वतिना प्रतिपादितत्वात् इवशब्दस्य सर्वथाऽभावात् प्रथमपादे समस्तपदे इवशब्दघटनस्य सर्वथाऽशक्यत्वाच्च रूपकमेवो-पमोपकारकमिति वाच्यमिति 'पादपादुपहृता रघूद्वहा'दित्यादावपि तथैव युक्तम् । ननु दर्शिताभीष्टदान इत्यत्र श्लेषस्योपमोपकारकत्वं साधारणधर्मसम्पादकतया । रूपकस्य तु कथमिति चेत् रूपकस्यापि तथैवेति गृह्यताम् । एकत्र एकपदोपादानात् धर्मयो-रभेदप्रतिपत्तिः । अपरत्र सामानाधिकरण्यादित्येतावानेव हि विशेषः ॥

**नाथस्य दत्ते नदराजकन्या पांसुं शुभान् पादनखेन्दुरश्मीन् ।**
**मणिप्रभाभिः प्रतिपन्नपक्षां लीलाचकोरीमिव पादुके त्वाम् ॥**

इत्यत्र मणिप्रभासु वैयधिकरण्येन कृतस्य पक्षत्वरूपणस्य पादुकायां लीलाचकोरीत्वो-त्प्रेक्षणनिमित्तभूतसामान्यधर्मसम्पादकतयैवोपयोगो वाच्य इति तद्वदेव प्रकृते कथं न सम्भवति ।

रूपकोपमासंकरः

अथात्र यो ब्रूयात् क एषु श्लोकेष्वलङ्कारः । नोपमैव । रूपकस्यापि सत्त्वात् । न रूपकमेव । उपमाया अपि सत्त्वात् । न चोभयम् । एकस्याप्य-परिपूर्णत्वात् । इति । स वक्तव्यः । न विध्वस्तघटशकलस्येव अपरिपूर्णता काचिदिह विद्यते । यावदुपलभ्यते रूपकं वा उपमा वा निर्व्यूढं वाऽनिर्व्यूढं वा तावत् तत्र पूर्णम् । न हि तिलतण्डुलमिश्रणे एकमपि तत्र न शुद्धमित्यनुभयरूपत्वं भवति । तेनोभयोरनुग्राह्यानुग्राहकभावेन सङ्करोऽत्र द्रष्टव्य इति । एतेन उपमित-समासस्थले क्वचिदप्युपमाया अवकाशमदत्त्वा सर्वत्र रूपकप्रतिष्ठापनाद् योऽस्माकं प्रसक्तः वरेन्दुरित्यादौ उपमारूपकसन्देहसङ्करविलयाधीनालङ्कारसंख्यान्यूनीकरणाप-चारः सोऽप्यर्थात् परिहृतो भवति । तत्स्थाने उक्तरीत्या निश्चयसङ्करस्य निवेशात् । परं तु नेदमस्मदुपज्ञमेव । भोजराजबुद्धिज्योत्स्नया प्रागेव प्रकाशितत्वात् । स खल्वाह—

**अथ सङ्कीर्णभेदानां चतुष्टयमिहोच्यते ।**

**तेषु सावयवसङ्कीर्णं यथा —**

रइअरकेसरणिवहं सोहइ धवलब्भदलसहस्सपरिगअम् ।
महुमहदंसणजोग्गं पिआमहुप्पत्तिपङ्कअं व णहअलम् ॥

[ रविकरकेसरनिवहं शोभते धवलाभ्रदलसहस्रपरिगतम् ।
मधुमथदंशन '(दर्शन)' योग्यं पितामहोत्पत्तिपङ्कजमिव नभस्तलम् । ]

अत्र पितामहोत्पत्तिपङ्कजमिव नभस्तलं शोभत इत्युपमानोपमेयभावेन अवयवावयविनो(अवयविनो) रभेदस्याविवक्षायां उपमैव न रूपकम् । रविकरधवलाभ्रदलसहस्रयोः ( -भ्रयोः ) केसरनिकरदलसहस्रयोश्च प्रतीय-मानाभिधीयमानसादृश्ययोश्च ( -योः ) सहजाहार्यावयवभूतयोरभेदोपचारेण रूपणमिति सावयवरूपेण ( -पकस्य) उपमायाः ( -मया) सङ्कीर्णत्वात् इदं सावयवसङ्कीर्णं नाम....

निरवयवसङ्कीर्णं यथा--

दीहो दिअहभुअङ्गो रइबिम्बफणामणिप्पहं विअसन्तो ।
अवरसमुद्दमुवगओ मुञ्चन्तो कञ्चुअं व घम्मनिवहम् ॥

[ दीर्घो दिवसभुजङ्गो रविबिम्बफणामणिप्रभां विकसमानः ।
अपरसमुद्रमुपगतो मुञ्चन् कञ्चुकमिव घर्मदिवहम् ॥ ]

दिवसावयविनो भुजङ्गावयविनश्च....अभेदोपचारेण रूपणम् । अवयवानां चतुर्णां रविबिम्बातपफणामणिनिर्मोकाणां सत्यामप्यभेदोपचारयोग्यतायां इव-शब्दप्रयोगेन उपमायां द्वयोस्तुल्यरूपणे ( -त्वे)ऽप्यसामानाधिकरण्यात् नावयवावयविभावो विभाव्यत इति निरवयवस्योपमायां (—मया) सङ्कीर्णत्वा-न्निरवयवसङ्कीर्णं नाम....

इति । (अत्र उपपादनानुरोधेन गाथाद्वितीयपादे उपमया भाव्यम् । यथास्थिते तु रूपकं भवति । पाठान्तरेणावश्यमेव भाव्यम् "रइबिम्बं फणमणिं व शिरसि वहन्तो" इत्येवंविधेन)। एतेनास्य सङ्करस्य अवयवोपमया अवयव्युपमया एकावयव-गतया अनेकावयवगतयेत्यादिप्रभेदबाहुल्यमपि सूचितम् । तदेवंविध उपमारूपक-सङ्करो न परं प्रामाणिकः अपितु प्राचीनेन आलङ्कारिकप्रवरेणाङ्गीकृतश्चेति ज्ञेयम् ।

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाविद्धं याति स्खलितमभिसन्धाय बहुशो
नदीरूपेणेयं ध्रुवमसहना सा परिणता ॥

इत्यत्र फेनं वसनमिवेति उपमायां सत्यामपि "तरङ्गा एव भ्रूभङ्गा यस्याः" इति रूपकं दर्शयतो लोचनकृतोऽपि सर्वमिदमभिमतमित्यवश्यं वक्तव्यमिति च ।

गूढं रूपकतत्त्वमेतदयथाज्ञातं यदि स्यादिदं
सर्वः सर्वमवैति नो अपितु यत्साहित्यविद्योद्धुरैः ।
माघादौ परिदृष्टवद्भिरुपमासङ्कीर्णतां रूपके
तूष्णीम्भूतमदृष्टवद्भिरिव तन्मन्येत को नाद्भुतम् ॥

एवंविधस्य सङ्करस्य दुष्टत्वे अन्येषां कवीनां तद्वर्जनोपदेशाय तदुद्घाटनं कर्तव्यम् । अन्यथात्वे तद्व्युत्पत्तये घटनाय च अलङ्कारविशेषप्रभेदत्वेन गणनं कर्तव्यम् । न च प्रदर्शितेषु कुत्रचिदस्यान्तर्भावः सुज्ञानः । न च विशिष्याभिधान-प्रयोजको विशेषः कश्चिदत्र नास्ति । समभिव्याहारात्मकवाक्यप्रमाणेन उपमा-रूपकविवेके क्रियमाणे उदाहृतेषु माघभारविश्लोकेषु विरुद्धवाक्यद्वयवशेन जाय-मानस्य सन्देहस्य लक्षणग्रन्थकारैरवश्यं निवारणीयत्वात् । एवं सत्यपि यदत्र मौनमाश्रीयते तत् कथं न विस्मयावहम् । यदि मतं—लक्षणविरोधात् एवं रचनां कुर्वन्त इमे कवयोऽनवहिता एवेत्यभिप्रायः । मौनं तु पौरोभाग्यभियेति । तन्न युक्तम् । परःसहस्रा ह्येवंविधाः श्लोका दृश्यन्ते । तत्र सुप्रबुद्धा एव कवय इत्येतन्न सन्देहास्पदीभवतीति । ननु विदित एव एवंविधः सङ्करो मम्मटस्य । यदाह—

"जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ।
परिप्रेङ्खत्तारापरिकरकपालाङ्कितत
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥

उपमा रूपकं उत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववदङ्गाङ्गितया प्रतीयन्ते "।

इति । रुय्यककस्य च । यदाह—

" बाधकं यथा—

शरदीव प्रसर्पन्त्यां यस्य कोदण्डटङ्कृतौ ।
विनिद्रजृम्भितहरिर्विन्ध्योदधिरजायत ॥

अत्र विन्ध्य उदधिरिवेत्युपमापरिग्रहे विनिद्रजृम्भितहरिरिति साधारणं विशेषणं बाधकं प्रमाणम् । ........ । अतश्च पारिशेष्याद्रूपकपरिग्रहः । न हि शरदीवेत्युपमाऽत्र उपमासाधकत्वेन विज्ञेया । न ह्यौपम्येन कदाचिदर्थसिद्धिः । न ह्यौपम्येनालङ्कारेण प्रक्रान्तेन निर्वाह्य(?) इति राजाज्ञैषा । नापि धर्मसूत्रकारवचनम् । नापि न्यायः । "

इति । तत् कथमुच्यते मौनमाश्रितमिति । इति चेत् सत्यमाभ्यामेतदुक्तम् । उक्तत्रिधविविधलक्ष्यपरिशीलने सति यद् वक्तव्यमापतति तत्र मौनमाश्रितमिति त्वब्रूम । करधृतेति विशेषणपर्यालोचनया हि कलङ्काक्षवलये रूपकं मम्मटोऽवधारयति । वारिपूर्वमखिलास्वित्यादिषु उपमारूपकोभयानुग्राहके सति किं कर्तव्यमिति हि सङ्कटा स्थितिः । तत्र अलङ्कारलक्षणकृता अवश्यमेव काचन गतिः प्रदर्शनीया । न च दर्शिता । तद्वदन्तो यदि वयमपराधिनः तर्हि क्षन्तव्याः । रुय्यकस्तु उपमोप्रक्रमं रूपकपर्यवसानमेतत्सङ्करमनुमन्यमानोऽपि एतद्विपरीतं सङ्करं कण्ठत एव निषेधति । ' विपर्ययस्तु दुष्ट एव ' इति । कवयस्तु ' दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः' ' मधरिपुरिव भास्वानेष एकोऽधिशेते ' ' जगति चातकवत् कृतिनः' इति बहुलमुपमावसानमपि सङ्करं निबध्नन्ति । कथमेतदिति हि तेनावश्यं वक्तव्यम् । न च किञ्चिदुक्तमिति । एतेन

" विशालवलभीभुजान् लघुविशीर्णलूतागुण-
प्रतानवसनश्रियः स्फुटसुधाविलासस्मितान् ।

नृसिंहवसुधाधिप त्वदरिवीरलीलागृहान्
विशङ्कमुपगूहते विपिनपावकज्वालिका ॥

अत्र वलभी भुजेव वलभीव भुजेत्याद्युपमासमाससामर्थ्योपजातगुण-साधारणत्वमाहात्म्यात् गृहानां पावकज्वालायाश्च नायकताख्यधर्मविशिष्टत्व-प्रतीतिः ।"

इति विद्याधरस्य समासोक्त्युदाहरणतद्योजने; "अत्रेति । वलभी भुजेवेत्युपमित-समासः । वलभीव भुजेति मयूरव्यंसकादिः" इति तत्रत्यं मल्लिनाथव्याख्यानम्; श्रीवेङ्कटनाथीये यादवाभ्युदये

विजृम्भमाणस्तनकुड्मलानां व्यक्तोन्मिषद्विभ्रमसौरभाणाम् ।
मधुव्रतत्वं मधुराकृतीनां लेभे लतानामिव वल्लवीनाम् ॥ ४-९६ ॥

इत्यस्य श्लोकस्य

"विजृम्भमाणौ स्तनौ कुड्मले इव यासाम् । लतापक्षे स्तनसदृशानि कुड्मलानि यासामिति समासः । व्यक्तं स्फुटं उन्मिषन् विकसन् विभ्रमः सौरभमिव यासाम् । पक्षे पूर्ववन्मध्यमपदलोपिसमासः"

इत्यप्पय्यदीक्षितव्याख्यानं च व्याख्यातम् । आद्ये हि श्लोके एकदेशविवर्तिरूपकमेवा-लङ्कारः न समासोक्तिः । तस्या रूपकप्रसङ्गरहितविशेषणसाम्यमात्राधीनत्वात् । द्वितीये रूपकोपमासङ्कर एवालङ्कारो नोपमैव । मधुव्रतत्वं लेभ इति रूपकच्छाया-यामपरिहार्यायां किमिति स्तनकुड्मलादौ तद्विशसनम् ।

दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशालिबृन्देन सुवेषा हरिणेक्षणा ॥

परिफुल्लाब्जनयना चन्द्रिकाचारुहासिनी ।
हंसावलीहारयुता शरद्विजयतेतराम् ॥

इत्यनयोः सर्वस्वरसज्ञाधरस्थयोः श्लोकयोरप्येकदेशविवर्तिरूपकमेव नालङ्करान्तरम् । यद्यपि द्वितीयश्लोके 'शरद्वर्षासखी बभौ' इति चतुर्थे पादे उपमा निबध्यते तदापि रूपकोपमासङ्करो नोपमैव । एवं चन्द्रिकेव चारुहास इति विग्रहेऽपि ।

निर्मलाम्बररम्यश्रीः किञ्चिद्दर्शिततारका ।
हंसावलीहारयुता शरद्विजयतेतराम् ॥

इत्यत्र तृतीयपादे रूपकसत्त्वादेकदेशिविवर्तिरूपकम् । तस्य तु पूर्वपादद्वयस्थश्लेषेण सङ्करः । न त्वत्र समासोक्तिरलङ्कार इति युक्तम् ।

आह्लादिचन्द्रवदना स्फुरत्तारकमौक्तिका ।
घना धकारधम्मिल्ला राजते गगनस्थली ॥

इत्यलङ्काररत्नाकरे समासोक्त्युदाहरणतया दर्शिते पद्येऽप्येवम् ।

तन्वी मनोहरा बाला पुष्पाक्षी पुष्पहासिनी[1] ।
विकासमेति सुभग भवद्दर्शनमात्रतः ॥

इत्यत्र तु पुष्पाक्षी पुष्पहासिनीत्युपमाया एव प्रतीतेरवयवोपमा । रुद्रटोक्ता एकदेशवर्तिन्युपमा वा । न तु समासोक्तिर्व्यङ्ग्यरूपकं वा ।

अथोपगूढे शरदा शशाङ्के प्रावृड्ययौ शान्ततटित्कटाक्षा ।

इत्यत्र तटित्कटाक्षेति रूपकस्य सत्त्वात्

> "रूपकगर्भत्वेन तु समासान्तराश्रयणात् समानविशेषणत्वं भवदपि न समासोक्तेः प्रयोजकम् । एकदेशविवर्तिरूपकमुखेनैव अर्थान्तरप्रतीतेस्तस्या वैयर्थ्यात् ।"

इति सर्वस्वकारोक्तरीत्यैव समासोक्तिर्न भवति । यत्तु समासोक्तिमत्राङ्गीकुर्वता तेन 'शान्ततटित्कटाक्षा' इत्यौपम्यगर्भं विशेषणं समासान्तराश्रयेणात्र समानम्' इत्युक्तं तत्सर्वथाऽसङ्गतमिति स्थितमेव । इदं त्वत्र वक्तव्यम् । यदि रूपकगर्भ-विशेषणसत्त्वे समासोक्तिर्नोचिता सा कथमुपमागर्भविशेषणसत्त्वे परमुचिता । भेदतिरोधानतदभावाभ्यामेव हि रूपकोपमयोर्भिदा । तद्यदि एकदेशे रूपकसत्त्वे समासोक्तिर्न भवति उपमासत्त्वेऽपि तथैवेति युक्तम् । इत्थं च

---

1. अयमेव पाठः सर्वस्वेऽपि स्वीकर्तव्यः । 'लोलाक्षी पुष्पहासिनी' इति तु तत्र मुद्रितम् ।

**ऐन्द्रं धनुः पाण्डुपयोधरेण शरद् दधानाऽऽर्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥**

इत्यत्र नखक्षताभमित्यवयवोपमानुरोधिभिः अवयविनि उपमा वा रूपकमेव वा सुकल्पमिति कृतं समासोक्त्या ।

परिणामः । रूय्यकः ।

तदेवं सुप्रतिष्ठिते निष्कण्टके रूपकसाम्राज्ये अस्ति कश्चिदलङ्कारसर्वस्वकृता रूय्यकेन प्रदर्शितो विशेषः येन तस्य परिणाम इति संज्ञान्तरं क्वचिद् भवति । तत्र " आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम " इति तल्लक्षणमुक्त्वा एवं विवृतम्—

" आरोप्यमाणं रूपके प्रकरणोपयोगित्वाभावात् प्रकृतोपरञ्जकत्वेनैव केवलेनान्वयं लभते । परिणामे तु प्रकृतात्मतयाऽऽरोप्यमाणस्योपयोग इति प्रकृतमारोप्यमाणतया परिणमति । "

इति । अत्र व्याख्याता जयरथः " प्रकृतात्मतयेति । प्रकृताङ्गतयेत्यर्थः " इत्याह । प्रकृतस्योपमेयस्य आत्मा शरीरस्यात्मवदुपकारकम् । उपकारकं चाङ्गमिति तस्य तथा विवृण्वतोऽभिसन्धिः ।

**अञ्जलिमातरमिच्छति संसाराम्भोधिनाविको देवः ।**

अत्र संसारनिवर्तको देवः तन्निवृत्तिकामेभ्योऽञ्जलिमिच्छति यथा नाविकः समुद्रतरणकामेभ्य आतरमिति आतरसमुद्रनाविका आरोप्यमाणाः प्रकृतानामञ्जलिसंसारदेवानामुपरञ्जकतयैव स्थिता इति रूपकमेतत् ।

**तस्मै सौमित्रिमैत्रीमयमुपकृतवानातरं नाविकाय**

इत्यत्र तु नाविकः प्रकृत एव गङ्गायास्तारकः । तस्मिन् रामेण कृता अतिशयिता मैत्री च प्रकृता । अस्यां अप्रकृतातरतादात्म्यमारोप्यते । एवं स्थिते प्रकृता मैत्री प्रकृतेन नाविकेन स्वरूपतः सम्बन्धायोग्या तद्योग्यवस्त्वन्तररूपत्वमात्मनोऽपेक्षते । आरोप्यमाणमातररूपं वस्तु च तद्योग्यम् । तेन प्रकृता मैत्री अप्रकृतातररूपेण परिणमति स्वरूपं विहाय अप्रकृतरूपेण प्रकृतान्वयं लभत इत्यर्थः । एवं चारोप्यमाण आतरः प्रकृताया मैत्र्याः प्रकृतनाविकसम्बन्धोपपादकतयोपकारकत्वादङ्गं भवतीति जयरथस्य भावः । प्रकृतं उपमेयं आत्मा यस्येति बहुव्रीहावपि आत्मा उपकार्यं प्रधानमिति

स प्रकृतार्थो बोध्यः। एतदनुरोधेन सूत्रे प्रकृतोपयोगित्वे इत्यस्य 'प्रकृते उपमेये वाक्योपात्तप्रकृतवस्त्वन्तरसम्बन्धनिर्वाहकतया य उपयोगस्तद्वत्त्वे' इत्यर्थो वाच्यः। यदि तु उपरि लक्षणसङ्गमनावसरे 'मैत्रीरूपतया' इति यदुक्तं तदनुसारेण 'प्रकृतात्मतया' इत्यस्य प्रकृतरूपतया इत्येवार्थ इष्यते तदा अयं भावः। आतरो मैत्र्यामारोप्यमाणो यद्यपि प्रकृतनाविकोपकारानुगुणः तथापि तत्स्वरूपमत्र नास्तीति कथं तस्य प्रकृतोपयोगित्वमिति न शङ्कनीयम्। प्रकृतं स्वस्य यत्रारोपस्तत् उपमेयं यदस्ति तदात्मतया तत्स्वरूपतयैव प्रकृतनाविकोपकारोपयोगित्वस्य विवक्षितत्वात्। प्रकृता मैत्री अप्रकृतात्मतया उपमानतावच्छेदकावच्छिन्नतया परिणमति अवस्थान्तरं प्राप्नोति। तथा प्रतीतिमपेक्षितां प्राप्नोतीत्यर्थः। तथा च आतरत्वेन गृहीता मैत्री आतरः सम्पद्यत इति मैत्रीरूपोऽयमातरः। धर्मी प्रकृत एव। धर्म एव तु आरोप्यमाणस्य। एवं स्वतादात्म्यसमर्पणेन प्रकृतस्य प्रकृतार्थान्तरसम्बन्धनिर्वाहकत्वमेव आरोप्यमाणस्य प्रकृतोपयोगित्वमिति सूत्रे उक्तमिति।

आरोपितमेकत्र प्रकृतस्यार्थान्तरस्य यद् भवति।
अनुगुणमेतदभिज्ञाः परिणामरहस्यमभिदधति॥

यथा —

अभियुक्तजनो निजार्भकाणां बहुशो रङ्गनरेन्द्रपादरक्षे।
अवलेपपिशाचमोचनार्थं रजसा लिम्पति तावकेन देहान्॥

अत्र हि पिशाच आरोप्यमाणो रजसा लेपनस्यानुगुणो भवतीति भवति परिणामः। एवं विषय एव विषयिरूपेण परिणतः प्रकृतार्थान्तरसम्बन्धं लभते। तेनारोप्यमाणस्य प्रकृतोपयोगित्वमिति स्थिते एतद्वैपरीत्येन 'परिणामःक्रियार्थश्चेद्विषयी विषयात्मना' इति लक्षणं कृत्वा यद् बहूच्यते तत्सर्वमयुक्तमिति उद्यानपत्रिकायां चित्रमीमांसापरिशुद्धौ सुनिरूपितम्।

जगन्नाथः

यत् पुनः रसगङ्गाधरे

"अत्र च विषयाभेदो विषयिण्युपयुज्यते। रूपके तु नैवमिति रूपकादस्य भेदः"

इति तद्रूपकेऽपि विषयाभेदस्यैवोपपादितत्वान्नादर्तुं शक्यम् । यच्च

"आरोप्यमाणस्य प्रकृतोपयोग इत्यस्य प्रकृतकार्ये उपयोगः । आहोस्वित् प्रकृतविषयात्मतया उपयोगोऽर्थः ।"

इति विकल्पितं तच्च न युक्तम् । प्रकृतकार्ये च प्रकृतविषयात्मतया चेत्युभयथाऽप्युपयोगाभ्युपगमात् तथैवानुपदमुपपादितत्वात् । न च

उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै -
र्यत् खिद्यते तव पदं ननु सा व्यथा मे ।

इति रूपकोदाहरणे आरोप्यमाणानां कण्टकानां प्रकृतखेदव्यथारूपकार्ये उपयोगेनातिप्रसङ्ग इति वाच्यम् । खेदस्य व्यथाया वा कण्टकमात्रसम्बन्धित्वाभावात् । 'खिद्यसे लोकहेतोः' 'अङ्गारचुम्बितमिव व्यथमानमास्ते' इत्यन्यत्रापि तत्सद्भावात् । तेन कण्टकरूपणपरित्यागेन 'उद्यत्कठोरपुलकाङ्कुरसम्प्रविद्धं यत् खिद्यते....' इत्यपि सामञ्जस्यात् कण्टकरूपणं तीक्ष्णाग्रत्वव्यञ्जनेन उपरञ्जनमात्रं करोति नतु प्रकृतोपयोगं लभत इति क्वातिप्रसङ्गः । नापि — प्रकृतविषयात्मतया उपयोगाङ्गीकारे

"अथ पत्तिमतामुपेयिवद्भिःसरसैर्वक्त्रपथाश्रितैर्वचोभिः ।
क्षितिभर्तुरुपायनं चकार प्रथमं तत्परतस्तुरङ्गमाद्यैः ॥

इति रुय्यकोक्तव्यधिकरणपरिणामोदाहरणानुपपत्तिः । राजसङ्घटने ह्युपायनस्यारोप्यमाणस्य स्वात्मनैवोपयोगो न तु विषयवचोरूपतया । वचसां तु विषयाणामारोप्यमाणोपायनरूपत्वेन परमुपयोग इति प्रत्युत विपरीतम्—"

इति शङ्क्यम् । उपायनस्यारोप्यमाणस्य स्वरूपतोऽसत्त्वेन स्वात्मना तदुपयोगस्यासम्भवात् । न हि विषयवचोव्यतिरिक्तं प्रथमोपायनं किञ्चिदस्ति यत् क्षितिपतये उपहृतं स्यात् । अथ आरोप्यमाणस्योपयोगो नाम आरोपसम्बन्धेन उपमानतावच्छेदकधर्मवतः प्रकृतधर्मिण एव आरोपितरूपेणोपयोगः । तथाच नासम्भव इत्युच्यते तदेव 'प्रकृतात्मतये'ति रुय्यकोक्तौ विवक्षितम् । प्रकृतात्मतया प्रकृतोपमेयधर्मिस्वरूपेणेत्यर्थः । न तु विषयतावच्छेदकरूपेणेति । अप्रकृतधर्मिण एवात्र अविद्यमा-

नत्वे तत्र धर्मान्तरान्वयप्रसङ्गस्य दूरोत्सारितत्वात् । एतेन 'विषयी विषयात्मना परिणमती' ति वचनं बाधितार्थमिति वेदितव्यम् ।

**चन्द्रत्वाद्याश्रयो धर्मी यस्तस्य न समन्वयः ।**
**आरोपेऽभित्यगृह्णद्भिर्विपरीतं बहूदितम् ॥**

आरोपः

एतेन यदुक्तं समासोक्तिप्रकरणे कुवलयानन्दे

"न तु रूपक इव प्रस्तुतेऽप्रस्तुतरूपसमारोपोऽस्ति । मुखं चन्द्र इत्यत्र मुखे चन्द्रत्वारोपहेतुचन्द्रपदसमभिव्याहारवत् ...."

इति ; यच्चैतत्खण्डनप्रवृत्तेन जगन्नाथेनोक्तम् —

"यत् तावदुच्यते मुखं चन्द्र इत्यत्र चन्द्रत्वारोप इति तन्न । नामार्थयोरभेदेनैवान्वयान्मुखे चन्द्रस्यारोपः न चन्द्रत्वस्य चन्द्रविशेषणस्य ।"

इति ; यच्चापरमेतत्खण्डने अप्पय्यदीक्षितोक्तिसमर्थने च प्रवृत्तेन नागेशेनोक्तम् —

"तादात्म्येन चन्द्रारोपे तादात्म्यस्यापि सम्बन्धविधयाऽऽरोपविषयत्वात् तस्य चन्द्रत्वानतिरेकात् चन्द्रत्वारोपेत्युक्तम् । न तु प्रकारतया चन्द्रतारोपः । अन्यत्र विशेषणत्वेनोपस्थितस्यान्यत्र प्रकारतया आरोपायोगादिति चिन्त्यमिदम् ।"

इति ; तत् सर्वं चिन्त्यमिति ज्ञापितम् । न हि—मुखं चन्द्र इत्यत्र मुखशब्देन वदनमिव चन्द्रशब्देन अखण्डमण्डल इन्दुरुपस्थाप्यते । एवं धर्मिद्वये प्रतिपन्ने तत् तथैव कृत्वा सामानाधिकरण्यवशेन पश्चात् तयोरभेदः श्रोत्रा आरोप्यते—इतीदृशी स्थितिरत्र केनचिदङ्गीकृता शक्या वाऽङ्गीकर्तुम् । पदद्वयस्यापि विभिन्नार्थद्वयनिष्ठत्वेन सामानाधिकरण्यस्यैव भङ्गप्रसङ्गात् । समानविभक्तिकत्वमात्रं सामानाधिकरण्यमिति चेन्न । एवमपि वस्तुतश्चन्द्राभेदस्य मुखे विरहेण तस्य संसर्गत्वानुपपत्त्या चन्द्रस्य मुखेऽन्वयासम्भवात् । आरोपसिद्धस्त्वभेदः अभेदप्रकारकाहार्यज्ञानविशेष्यत्वरूपतया भेदसंसर्ग एवेत्युक्तत्वाच्च । तस्मात् वास्तव एवाभेदः संसर्गः । स च पदावस्थायामेव

चन्द्र इव चन्द्र इति चन्द्रपदेन आरोपितचन्द्रत्ववन्मुखधर्म्यभिधानात् सूपपन्न इति द्रष्टव्यम् । किञ्च अस्या मुखं चन्द्र इत्यत्र मुखधर्म्यतिरेकेण चन्द्रधर्मी भासते न वा । नाद्यः । नायिकाग्रीवावर्तित्वेन चन्द्रबिम्बारोपस्यापरस्य प्रसङ्गात् । धर्म्यन्तरप्रतीते-रननुभवाच्च । नान्त्यः । चन्द्रारोपस्यानङ्गीकर्तव्यत्वापत्तेः । किञ्च मुखे किं चन्द्र-स्वरूपस्यैव आरोपः उत चन्द्राभेदस्य । आद्ये मुखे चन्द्र इति प्रतीतिः स्यान्न मुखं चन्द्र इति । अन्त्ये चन्द्रत्वस्यैव आरोपः न चन्द्रस्य । अभेदो हि भेदाभावः भेदप्रति-योगितावच्छेदकरूपः । अभेदसम्बन्धेन चन्द्रस्वरूपस्यैव आरोप इति चेत् उक्तिमात्र-मत्र भिन्नम् नार्थस्वरूपम् । अभेदेन चन्द्रो हि चन्द्राभेद एव । न हि संयोगेन घटवद्भूतलं घटसंयोगवद्भूतलमित्यनयोर्विशेषः कश्चिदस्ति । यदि चास्ति तर्हि घटवद्भूतलमितिवत् चन्द्रवन्मुखमिति प्रतीतिः स्यात् ।

### रूपकविभागः

नन्वेवं अभेदरूपकं ताद्रूप्यरूपकमित्येवं क्रियमाणस्य विभागस्य कथमुपपत्ति-रिति चेत् न कथमपि । अप्रामाणिक एव सः । अत एव रसगंगाधरेऽनादृतः ।

### बुधरञ्जनीकारः

" तच्च क्वचित् प्रसिद्धविषय्यभेदपर्यवसितम् । क्वचिद् भेदे प्रतीयमान एव तदीयधर्मारोपमात्रपर्यवसितम् । ततश्च रूपकं द्विविधम्---अभेदरूपकं ताद्रूप्यरूपकञ्चेति । "

इतीमं कुवलयानन्दग्रन्थं व्याचक्षाणेन व्युत्पन्नमतिना प्रगल्भेन बुधरञ्जनी[1]कारेण एतत्समर्थनार्थं यदुक्तं तदपि नास्मत्परितोषाय । तथाहि ।

" ननु रूपकमात्रस्याभेदप्रधानत्वेन तत्र अभेदताद्रूप्यविभागानुप-पत्तिः । किञ्च ताद्रूप्यस्य अभेदान्नातिरेक इति सुतरां तदनुपपत्तिरित्यत आह तच्चेति । पूर्वोक्तरञ्जनञ्चेत्यर्थः । भेद इति । प्रसिद्धविषयिभेद इत्यर्थः । तदीयेति । विषयितावच्छेदकचन्द्रत्वादीत्यर्थः । तथा च प्रसिद्धविषय्यभेदे अभेदरूपकम् । तद्भेदेऽपि तद्धर्मारोपे ताद्रूप्यरूपकमिति विवेक इति भावः । नचैवमभेदप्राधान्यसिद्धान्तव्याकोपः । ताद्रूप्यरूपके

1. इदं व्याख्यानमद्य उद्यानपत्रिकानुबन्धरूपेण प्रकाश्यते ।

पेक्षया प्रसिद्धस्य पदगतगौणत्वाङ्गीकारस्यैव न्याय्यत्वेन विपरीतनिर्णायकस्यैव सत्त्वात् । पदेषु हि लक्षणा सर्वैः शास्त्रकारैरङ्गीकृता सुप्रसिद्धा । न तु संसर्गारोपः । आहार्यशाब्दनिरासात् । आहुश्च वाक्यतत्त्वविदः 'लक्षणाऽपि हि लौकिकी । हठोऽप्रसिद्धकल्पना ' इति । अपि च संसर्गो वाक्यार्थः न तु पदार्थ इति तावत् स्थितम् । तत्रायमारोपितसंसर्गरूपो वाक्यार्थः किं मुख्यः उतामुख्यः । नाद्यः । स्खलद्गतित्वात् । बाधे सति इच्छया ह्यत्र प्रत्ययः । नान्त्यः । वाक्यार्थस्यामुख्यत्वे तस्मिन्नर्थे वाक्यस्यामुख्यत्वापत्तेः । इष्टं तदिति चेन्न । पदामुख्यत्वमनिच्छता वाक्यामुख्यत्वस्य सुतरामनेष्टव्यत्वात् । वृश्चिकभिया पलायमानस्य आशीविषमुखे निपात इति ह्याभाणकः । वरं हि पदस्य दोषो न वाक्यस्य ।

अपिच भ्रान्तव्यवहारः कथमिति निरूपणीयम् । तस्य ह्यनाहार्य आरोपः । शुक्तिरजतदर्शिना किं कुत्र आरोप्यते । यदि तावच्छुक्तिधर्मिणि रजतधर्मी । तन्न । इदं रजतवदित्यभिलापापत्तेः । शुक्तिधर्म्यतिरेकेण धर्म्यन्तरविषयत्वाप्रतीतेश्च । अथ यदि शुक्तिधर्मिणि रजतत्वधर्मः तर्हि अभ्रान्तस्य आहार्यारोपोऽपि तावन्मात्रविषय एव । यद् भ्रान्त्या गृहीतं तन्मात्रं हि अभ्रान्तेन ग्रहीतुं न शक्यत इत्याहार्यारोपमपेक्षते । तस्मात् समानाधिकरणपदप्रयोगकारणीभूत आहार्यारोपो धर्ममात्रविषय इति तद्वाचिना पदेन प्रकृतस्यैव धर्मिणोऽभिधेयत्वात् पदमेव गौणं भवति न वाक्यमिति विभाव्यम् ।

### चित्रमीमांसा

यत्त्वत्र चित्रमीमांसायां विकल्पः कृतः दूषणं च—

" मुखं चन्द्र इत्यत्र लक्षणया मुखे प्रवर्तमानं चन्द्रपदं[1] केन निमित्तेन प्रवर्तेत । मुखत्वेन वा मुखासाधारणकान्तिविशेषेण वा चन्द्रत्वेन वा चन्द्रासाधारणकान्तिविशेषेण वा मुखचन्द्रोभयानुगतकान्तिसामान्येन वा मुखगतचन्द्रसादृश्येन वा । नाद्यः । मुखपदेन पौनरुक्त्यापत्तेः । मुखत्वस्य शक्यासम्बन्धित्वेन तेन निमित्तेन लक्षणायोगाच्च । अत एव न द्वितीयः । न तृतीयचतुर्थौ । मुखावृत्तिधर्मयोस्तत्र प्रवृत्तिनिमित्तत्वायोगात् । न पञ्चमः ।

1. अयं श्री. वे. ओ. इ. ३२३४ तालकोशपाठः । मुद्रितस्तु 'चन्द्रत्वं ' इति ।

कान्तिमान्मुखचन्द्र इत्यादौ कान्तिमत्पदेन पौनरुक्त्यापत्तेः। नापि षष्ठः। सादृश्यस्य शब्दप्रतिपाद्यत्वेनाऽव्यङ्ग्यत्वेन रूपकस्योपमापृथग्भावानुपपत्तेः। अभेदप्रधानं रूपकमिति सिद्धान्तविरोधाच्च। तस्मात् रूपके स्वस्वपदाभिहितयोर्विषयविषयिणोरभेदप्रतिपत्तिः संसर्गमर्यादयेत्येव वक्तव्यम्....''

इति तत्सर्वं ''अतिशयोक्तौ विषयाभिधायिमुखादिपदाप्रयोगाच्चन्द्रादिपदेनैव तत्प्रत्यायनं कार्यमिति तस्य तत्र लक्षणाऽवश्यमास्थेया'' इति वदता एतद्ग्रन्थकृतैवावश्यं समाधेयम्। अतिशयोक्तावपि चन्द्रादिपदेन मुखादिलक्षणायां हि सर्वे इमे विकल्पाः प्रथमविकल्पे 'मुखपदेन पौनरुक्त्यापत्तेः' इति यद् दूषणं तद्वर्जं सर्वाणि दूषणानि च प्रसरं लभन्ते।

यदपि 'कान्तिमान्मुखचन्द्र इत्यादौ काठकाध्यापकादिवत् संसर्गमर्यादयैवाभेदप्रतिपत्तिसम्भवेनातिक्लिष्टलक्षणाश्रयणायोगात्' इति तत्र विषमो दृष्टान्तः। काठकाध्यापकादौ हि वस्तुतोऽभेदसंसर्गो विद्यते। मुखचन्द्रादौ तु नासावस्तीति।

अथापि मुखं चन्द्र इत्यत्र कृतस्य लक्षणादूषणस्य कः परिहार इति चेत् आरोपितार्थवृत्तित्वं गौणत्वमिति गौणीलक्षणादेव स सुलभः। चन्द्रत्वेनैव निमित्तेन चन्द्रपदं मुखे प्रवर्तत इत्यभ्युपगमान्न विकल्पान्तरदूषणानामत्र प्रसङ्गोऽस्ति। यत्तु तत्र दूषणं मुखावृत्तिधर्मस्य कथं तत्र प्रवृत्तिनिमित्तत्वमिति तत् संसर्गेऽपि तुल्यम्—मुखावृत्तेश्चन्द्राभेदस्य कथं तस्मिन् संसर्गत्वमिति। आरोपोऽन्यत्रापि सुवचः। उक्तश्च सर्वैः प्राचीनैः सारोपसाध्यवसानलक्षणां निरूपयद्भिः। तथा च मुकुलभट्टः—

''गौणः पुनरुपचारो यत्र मूलभूतोपमानोपमेयभावसमाश्रयेणोपमानगतगुणसदृशगुणयोगे लक्षणां पुरस्सरीकृत्य उपमेये उपमानशब्दस्तदर्थश्चाध्यारोप्यते। स हि गुणेभ्य आगतत्वाद् गौणशब्देनाभिधीयते। यथा गौर्वाहीक इति। अत्र हि गोगतजाड्यमान्द्यादिगुणसदृशजाड्यमान्द्यादियोगाद् बाहीके गोशब्दगोत्वयोरुपचारः''।

इति। मीमांसकाश्चैवमाहुरिति वक्ष्यते। लोके च जना आरोपितधर्मवत्तयैव तद्धर्मप्रवृत्तिनिमित्तकं शब्दं प्रयुञ्जते। यथा स्थाणौ चोरत्वबुद्ध्या पलायमानस्य भयं

शमयन् तज्ज्ञो ब्रवीति 'चोरं पश्य। नायं चलिष्यति न प्रहरिष्यती'ति। आरोपितचोरत्ववानेव हि तत्र चोरशब्दार्थः चोरः चोरत्वेन गृहीत इति। तस्मात् स्वप्रकारकारोपविशेष्यत्वसम्बन्धेन चन्द्रत्वस्य मुखे विद्यमानत्वादविद्यमानत्वं कृत्वा दत्तं दूषणमलग्नं भवतीति।

यदपि गौणस्योपमानशब्दस्योपमेये वृत्तिः रूपकमिति भोजाद्युक्तस्य लक्षणस्य दूषणम्––"व्यङ्ग्यरूपकेऽव्याप्तिः। न हि तत्र उपमेयवाचि गौणमुपमानपदमस्तीति। तदपि न लगति। वाच्यस्यैव रूपकस्यालङ्कारत्वेन लक्ष्यत्वात्। अलङ्कारत्वावस्थायां लक्षणस्याव्याहतत्वात्। अलङ्कार्यत्वावस्थायां ब्राह्मणश्रमणकन्यायेन तत्सङ्गमनात्। किञ्च अर्थे व्यञ्जिते तद्वाचकशब्दोपस्थितिरपि व्युत्पन्नानामवर्जनीयेति पदमपि व्यञ्जितमेव। तेन पदासत्त्ववचनमनादरणीयमिति।

अथ यत् नेलानन्देन चन्द्रेणेत्यादौ शुद्धसारोपलक्षणामूले रूपकेऽव्याप्तिरिति। तदपि न। उपमानोपमेयपदघटितं रूपकलक्षणं प्रणीतवद्भिःकैश्चिदपि रूपकस्यात्रानङ्गीकारात्[1]। चमत्कारे सति कुतो न रूपकमिति चेन्न। चमत्कारे सति कुतो नोपमेत्यपि प्रष्टुं शक्यत्वात्। इवाद्यभावान्नोपमेति चेत् उपमानोपमेयभावाभावान्न रूपकमिति तुल्यम्। उपमानोपमेयभावो मा भूत् रूपकमस्त्विति चेन्न। इवादिर्मा भूत् उपमाऽस्त्वित्यपि प्रसङ्गात्। उपमा सादृश्यम्। तस्य वाचक इवादिः। वाचकाभावे कथं वाच्यं स्यादिति चेत् उममेयस्य उपमानरूपेण रूपवत्करणं रूपकम्। तदुपमानोपमेयाभावे कथं स्यादिति समानम्। अन्यस्यान्यरूपेण रूपवत्करणं रूपकमिति रूपकस्य लक्षणम्। न तु भवदुक्तमिति चेत् किमत्र प्रमाणम्। रूपकसमाख्यैव। रूपवत्करोति रूपयति इति हि रूपकम्। स्वस्यैव स्वकीयेन रूपेण रूपवत्करणायोगात् अन्यस्येति गम्यते। उपमेयस्येति सङ्कोचे तु न किञ्चत्प्रमाणमिति चेत् तर्हि रथकाराधाने रथं कुर्वन् सर्वोऽधिक्रियेत न सङ्करजातिविशेष एव। रथं करोति रथकार इति हि व्युत्पत्तिः। नन्वत्र रूढिर्योगमपहरतीति चेत् रूपकपदे तथा कुतो न भवति। नात्र रूढिरस्तीति चेत् कुतो न। अनुपलम्भादिति चेन्न।

1. 'आरोपो रूपकम्' इति लक्षयता अलङ्काररत्नाकरकृता शोभाकरेण तु अत्र रूपकमङ्गीक्रियते।

अथ 'लुप्तोपमानि' 'उपमानेन यत्तत्त्वम्' 'उपमैव तिरोभूतभेदा' 'उपमानोपमेययोरभिदा' 'उपसर्जनोपमेयं कृत्वा' 'तद्रूपकमभेदो य उपमानोपमेययोः' इति चिरानुवृत्ताविगीतप्राज्ञप्रयोगभूम्नैव तदुपलम्भादित्यास्तां तावत् ।

### वृत्तिवार्तिकम्

एतेन वृत्तिवार्तिकस्थमपि प्रकृतविषयानुबन्धि सर्वं विमृष्टं भवति। तथाहि ।

"अत्रेदं तत्त्वम् । 'विद्वन्मानसहंस——' इत्यदौ हंसादिपदानां वर्ण्ये राजनि लक्षणा नाङ्गीकर्तव्या । सामानाधिकरण्येन वर्ण्यस्य राज्ञः प्रसिद्धहंसजात्यादिभिरभेदस्य वाक्यार्थविधयैव प्रतीत्युपपत्तेः ।

इति यदुक्तं तत्तावन्न सम्भवतीत्युक्तम् असकृच्च बहुधा च । यत्पुनरत्र "हंसपदे रूपकौपयिकी लक्षणा न सम्भवति । मानसवृत्तित्वरूपसादृश्यप्रतीत्यधीनत्वात् राजनि लक्षणायाः एवंविधलक्षणाऽधीनत्वाच्च तादृशसादृश्यलाभस्य अन्योन्याश्रयात् । सादृश्यमूललक्षणानिर्वाह्यरूपकप्रत्ययविरहे हि मानसपदस्य मनोमात्रवाचित्वात् सरोवाचित्वं न भवतीति सादृश्यप्रतीतिरेव नास्ति" इति लक्षणाया दूषणं तदयुक्तम् । सामानाधिकरण्यात् कविरत्र वर्णनीये हंसत्वमारोप्य व्यवहरतीति जानन् बोद्धा सहृदयः आरोपनिमित्तं सादृश्यमन्विष्यन् मानसपदं श्लिष्टं ततः सादृश्यं च प्रतीत्य वाक्यार्थमास्वादयतीति स्थितौ का नामानुपपत्तिः । 'प्रसिद्धहंसजातीयादिभिरभेदस्ये'-त्यत्र यदि हंसत्वजातिमदभेदोऽभिप्रेतः तर्हि स हंसत्वजातिरूप एवेति न ताद्रूप्या-तिरिक्तोऽभेदो नाम कश्चित् । अथ हंसत्वजात्याश्रयव्यक्तिविशेषाभेदः सोऽत्र नैव प्रतीत इत्यभेदवर्णनं पुनरत्रानुपपन्नम् । यदपि——"विषयविषयिपदसामानाधिकरण्ये रूपकम् । विषयिपदमात्रनिर्देशेऽतिशयोक्तिः" इति व्यवस्थामुपेक्ष्य 'ताद्रूप्ये रूपकम् । अभेदेऽतिशयोक्तिः' इति व्यवस्थामादृत्य

हृत्पङ्कजानि भजतां प्रतिबोधयन्ती<br>
संसारसागरमपि प्रविशोषयन्ती ।<br>
ज्योत्स्ना त्वदङ्घ्रिनखचन्द्रसमुद्गतेय-<br>
मन्यादृशीमभयदां प्रकृतिं बिभर्ति ॥

इत्यत्र स्वकान्तिरूपविषयनिगरणेन 'ज्योत्स्ना' इति विषयिपदमात्रनिर्देशोऽ पङ्कजविकासकत्वादिना प्रसिद्धज्योत्स्नातो व्यतिरेकेण तत्ताद्रूप्यमात्रप्रतीतेरतिशयोक्ति मपहाय रूपकमेवाङ्गीकर्तव्यम् । तद्वत् 'विद्वन्मानसहंस—' इत्यादौ विषयविषयि पदसामानाधिकरण्येऽप्यतिशयोक्तिरङ्गीक्रियताम् । किमनुपपन्नम् "— इत्युच्यते तदपि न युज्यते । एवं हि सति 'मुखं चन्द्रः' इत्यतिशयोक्तिः 'अनाका कोऽयं गलितहरिणःशीतकिरणः' इति रूपकमिति स्यात् । अस्त्विति चेत् प्राञ्चोऽव ञ्चश्च आलङ्कारिकाः किमत्र वक्ष्यन्तीति किञ्चिदालोचनीयम् । कुवलयानन्दस्य का गतिः यत्र एतद्वैपरीत्यमाश्रितम् । अस्मन्नयाश्रयणे तु नैवं किञ्चित् सङ्कटं भवति न ताद्रूप्यमिति अभेद इति भिन्नाविमावर्थौ । यथा हंसपदं तथा ज्योत्स्नापदमप्य रोपितार्थवृत्तित्वाद् गौणम् । परन्तु विषयानुपादानादतिशयोक्तिर्भवति । तदुपादाना हंसेति रूपकम् । ननु

"अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात् ।"

इत्यत्र साक्षात्पदेन येन दग्धा इति विशेषणेन च शिवाभेद एव प्रतीयत इ वक्तव्यम् ।

साध्वीयमपरा लक्ष्मीरसुधासागरोदिता ।

इति तु प्रसिद्धलक्ष्मीभेदावगमेनाभेदो न भवतीति तदीयरूपमात्रं वर्णनीया वक्तव्यमिति क्वचिदभेदः क्वचित् ताद्रूप्यमित्येष विभागो दुष्परिहर इति चे दत्रोच्यते । प्रसिद्धशिवाभेद इति किमभिप्रेतम् । यदि प्रसिद्धशिवव्यक्त्यैक्यमे तदसम्भवि । 'पूर्वावस्थातो वर्णनीयराजभावावस्थायाम्' इति व्यक्तिभेदाश्रयणात् नात्र व्यक्तिभेदः । एकस्या एव शिवव्यक्तेश्चेतनविशेषरूपायाः शरीरान्तरसम्बन्धात्म कावस्थामात्रभेद इति चेत् तर्हि अयमिति सर्वनाम्ना वर्णनीयराजशरीरावच्छिन्न जीवात्मविशेष उपस्थाप्यते न वा । आद्ये कथं व्यक्त्यभेदः । अत एव आरोप्य इति चेत् आरोप्यमाणोऽयं व्यक्त्यभेदः किं धूर्जटित्वरूपः उत चेतनविशेषगत तद्व्यक्तित्वरूपः उत तद्व्यक्तिप्रतियोगिकान्योन्याभावात्मकभेदप्रतियोगिकाभावरूपः उता तिरिक्तः कश्चन पदार्थः । सर्वथाऽपि तद्धर्मरूपत्वात् ताद्रूप्यान्नातिरिच्यते । तद् तदी रूपं धर्मो यस्य तस्य भावो हि ताद्रूप्यम् । शिवत्वादिः सर्वोऽपि तद्धर्म एव । द्वितीयादि

षु कल्पेषु चमत्कारलेशस्यापि प्रत्याशा नास्तीति विशेषः। ननु अन्यत् ताद्रूप्यम् अन्यच्च तादात्म्यम्। तादात्म्यमेव चाभेदः। तत्कथं ताद्रूप्यरूपतोच्यते। अत्र ब्रूमः। तादात्म्यं नाम व्यक्त्यैक्यम् द्वितीयव्यक्तिराहित्यम्। अत्र व्यक्तिद्वयस्यापि भानेऽङ्गीक्रियमाणे द्वितीयव्यक्तिराहित्यारोपस्य किं फलम्। एतदारोपे सति हि एका व्यक्तिः पटाच्छादितेव किञ्चित्तिरोहितेति भाव्यम्। अस्तु तर्हि अन्त्यः कल्प इति चेत् साक्षादेवेदमापतितं यदुच्यते देवं विक्रीय यात्रोत्सव इति। वर्णनीयो हि राजात्मा। तस्याभाने शिवात्मभानेन कस्यालालङ्करणं भविष्यति। नायं साधारणो जीवात्मा अपि तु शिव एवेत्यलङ्कार इति चेत् एवमपि प्रकृते धर्मिणि जीवत्वं प्रतिषिध्य शिवत्वमारोपितमिति तादात्म्यस्य का प्रसक्तिः। रूपकमपहाय अपह्नुतिः सम्पादितेति तु विशेषः। यथोक्तम् —

शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः।
नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम्॥

इति। यदपि

"न च — एवमभेदप्रत्ययसम्भवेऽपि ताद्रूप्यप्रत्ययो न लक्षणां विना सिध्येत्। स एव च विषयविषयिपदसामानाधिकरण्यस्थले सर्वत्र विवक्षितः— इति वाच्यम्। तत्र मानाभावात्।

ऊर्ध्वं विरिञ्चिभवनात् तव नाभिपद्मा-
द्रोमावलीपदजुषस्तमसः परस्तात्।
मुक्तौघमण्डितमुरस्स्थलमुन्मयूखं
पश्यामि देव परमं पदमेव साक्षात्॥

इत्यादौ विषयविषयिपदसामानाधिकरण्येऽप्येवकारसाक्षात्पदाभ्यामुरःस्थले प्रसिद्धपरमपदाभेदविवक्षाया एव स्फुटीकरणाच्च"

इत्युच्यते तदपि सर्वमेतेन व्याख्यातम्। अभेदप्रत्ययस्यासम्भवात्। एवकारसाक्षात्पदयोः सामानाधिकरण्यावसिताभेदनिर्वाहकपरमपदत्वारोपानुवादमात्ररूपत्वात्। तयोर्विषयव्यावर्तकत्वेऽप त्यलङ्कारप्रसङ्गात्। पश्यतेर्मत्यर्थत्वे उत्प्रेक्षाप्रसङ्गाच्च। एवञ्च

चन्द्रत्वाद्याश्रयो धर्मो यस्तस्य न समन्वयः ।
आरोपेष्विति यत् पूर्वमुक्तं तत् प्रतितिष्ठति ॥

ननु यथा नेत्रं नीलोत्पलमित्यत्र नेत्रे नीलोत्पलत्वारोपः तथैव यदि 'पश्य नीलोत्पल द्वन्द्वात्' इत्यत्रापि, कथं तर्हि साध्यवसानाऽत्र लक्षणेति विशेष उच्यते । विषय वाचकपदानुपादानेऽपि विषयितावच्छेदकारोपो ह्यविशिष्टः । सत्यम् । सारोपैव लक्षण ऽत्रापि । तथापि विषयतावच्छेदकरूपेण विषयस्य अशाब्दत्वेनाध्यवसेयत्वात् अने विशेषेण साध्यवसानत्वेऽत्रोक्ते सामान्यमपि सारोपत्वं विशेषान्तरमात्रपरतया व्यवहृत मासीत् । यथा ब्रह्ममीमांसाया वेदान्तत्वेन प्रसिद्धौ जातायां सामान्योऽपि मीमांस शब्दः पूर्वतन्त्रे तद्वत् । साध्यवसाना निरध्यवसानेत्यत्रैव तु तात्पर्यम् । न 'याताःकणादतां केचित्' इत्यपि रूपकं भवति । तत्र सादृश्यमूलस्य तत्त्वारोपस्य विरहात् भवदुक्तं रूपकजीवितमव्याप्तिग्रस्तमिति चेन्न । याता इत्यस्य 'आरोपसम्बन्धे सम्बन्धिनः' इत्यर्थात् । आरोपसम्बन्धेन कणादत्ववदभिन्ना इत्येव पर्यवसानात् गौणकणादपदोत्तरमेव तत्रोऽङ्गीकाराद्वा । इति ॥

एवं राजानकरुय्यकीयं परिणामलक्षणं सुस्थमिति दर्शितम् । अनुषङ्गत उदा हरणशुद्धिरपि । अथ यदेभिर्वैपरीत्येन परिणामलक्षणं शिक्षितवद्भिः परिणामो दाहरणत्वेन पद्यानि पठितानि तत्र सर्वत्र रूपकमेवेति ज्ञेयम् । तथाहि ।

'समन्तात्सन्तापं हरिनवतमालस्तिरयतु'

इत्यत्र संसारसन्तापः प्रकृतः । तत्र प्रकृतस्य हरेः सम्बन्धः । अप्रकृतस्तु अरण्य सरणिसञ्चाराधीनः सन्तापः । सोऽप्रकृततमालानुगुणः । तथाच प्रकृताप्रकृतसम्बन्ध एव नास्ति । कुतःपरिणामः । 'श्रावंश्रावं वचः सुधाम्' इत्यत्र वचस्त्वेन प्रकृतश्रवण सम्बन्धस्य 'पायंपायं वचःसुधा' मित्यत्र आरोपितेन सुधात्वेन अप्रकृतपानसम्बन्धस्य चोपपत्तेः नास्ति परिणामः । एवमहीनचन्द्रेति श्लोकेऽपि योषाया विरहितोषहेतुत्व स्वत एवेति न परिणाम इति रमणीयं सर्वम् ।

## प्रयोजनम्

तत् सिद्धं एवंविधपरिणामप्रसङ्गवर्जितेषु पादारविन्दादिषु समासस्थलेषु रूपकमेव नोपमा; समासोऽपि परिणामे वा रूपके वा उपमितसूत्रेणैवेति ।

इत्थं सिद्धान्ते स्थिते एतद्विचारप्रयोजनमुच्यते । श्रीभाष्योपक्रमस्थस्य

'पाराशर्यवचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृताम्'

इत्यादेर्द्वितीयश्लोकस्य व्याख्याने व्यासार्यैरेवमुच्यते —

"रूपकप्रकरणात् सुधाशब्दलक्षणाभयाच्च सुधेव वच इति 'उपमितं व्याघ्रादिभिः' इत्यादिसमासमपर आचार्या आद्रियन्ते। सुधाशब्देन भोग्यत्वमभिप्रेतम् ।"

इति । अत्र उद्भटानुसारिभिर्मम्मटादिभिः स्वयशश्छादितभामहादिप्रसिद्धिभिः प्रौढैरालङ्कारिकैः उपमितसमासस्य उपमामात्रविषयतया व्यवस्थापितत्वात् रूपकप्रकरणादिति हेतोः उपमितसमासस्य साध्यस्य च का सङ्गतिरिति प्रबलविप्रतिषेधशङ्का जायते ।

एतस्याः परिहारे च बहुधा यतितं बुधैः ।
किन्तु गम्भीरवेदान्तचिन्तनामृतनिर्वृताः ॥
नैव तेऽबिभरुःश्रद्धां सुविमृश्य परीक्षितुम् ।
साहितीवेदिभिः शब्दशास्त्रज्ञैर्वा यदीरितम् ॥
तदेतदखिलं तावत् सम्यगत्र निरूपितम् ।
व्यासार्यवचनं येन भवत्येतत् सुसङ्गतम् ॥
शरीररूपकन्यस्तं भाषते बादरायणः ।
लुप्तोपमेति यास्केन रूपकं परिकीर्तितम् ॥

'अथ लुप्तोपमानि अर्थोपमानि इत्याचक्षते। सिंहो व्याघ्र इति पूजायाम्। श्वा काक इति कुत्सायाम्' इति ।

वेदवेदान्तशेषत्वमित्थं रूपकचिन्तनम् ।
उपयाति यतस्तस्माद् विचारोऽयं न निष्फलः ॥

मीमांसकाः

ननु मीमांसाभाष्ये

'न चासति सिंहे परिकल्पनया प्रवर्तेत । कल्पनाया अशक्यत्वात्'

इति, तद्व्याख्याने कौमारिले तन्त्रवार्तिके च तत्सिध्यधिकरणे

"कश्चित्पुनराह समारोपिततद्भावो गौण इति। तस्यैतन्मतम्। न कथञ्चन परशब्दस्तया जात्या स्वनिबन्धनभूतया विना अत्यन्तानभिधेयक्रियागुणमात्रद्वारेणान्यत्र वर्तितुमर्हति। न च सिंहशब्देनाप्रवर्तमानेन सिंहो देवदत्त इति सामानाधिकरण्यप्रयोगो घटते। कथं तर्हि।

अर्थेष्वर्थान्तरात्मानमध्यारोप्योपपादितम्।
वाच्यमासाद्य शब्दानां स्वयमेव प्रवर्तनम्॥

सिंहादिसदृशक्रियागुणदर्शनेन हि देवदत्तादयः सामस्त्यपरिकल्पनया सारूप्यमापद्यन्ते। ततश्च स्वार्थ एव शब्दः प्रयुज्यते। न चैतावता मुख्यप्रसङ्गः। अर्थस्याध्यारोपितत्वात्। यत्र तु स एवार्थः, न समारोप्यते तत्र मुख्य इत्यदोषः। तत्रेदमुच्यते। नैतत्। कल्पनाया अशक्यत्वात्। तथाहि।

असङ्कीर्णस्वभावं सद् वस्तु वस्त्वन्तरात्मना।
आरोप्यतेऽभिधानार्थं कथं नु भ्रान्तिवर्जितैः॥

किञ्च

यद्यध्यासेन वक्तॄणां गौणी वृत्तिः प्रकल्पते।
वेदे सा न कथञ्चित् स्यादध्यारोपयितुर्विना॥"

इति आरोपजीवितस्य रूपकस्य सर्वात्मना निरस्तत्वात् वेदशेषत्वमेतन्निरूपणस्य प्रतिज्ञायमानं केवलमलङ्काराभिनिवेशमात्रं प्रकाशयति न तु वस्तुवृत्तं तथेति चेत्

अत्र मीमांसकाग्रेसरैरेव यदुक्तं तदवधेयम्। तत्र सर्वशास्त्रविदपि मीमांसाप्रधानः खण्डदेवो मीमांसाकौस्तुभे तत्रैव तत्सिध्यधिकरणे इदमाह —

"यत्तु वार्तिके निरारोपगौणीस्थले आरोपवाद्युक्तारोपनिराकरणार्थं न क्वाप्यारोपः स्वोत्प्रेक्षाप्रभवः।........................ इत्युक्तम्। तत् निरारोपगौणीस्थले अप्रतीयमानारोपकल्पने प्रमाणाभावस्येव रूपकादौ प्रतीयमानारोपत्यागे प्रमाणाभावस्य तुल्यत्वात्.......................... प्रौढिवादमात्रमारोपवादिप्रसरनिराकरणार्थमित्यवधेयम्।"

इति । इतःपूर्वञ्च —

"कीदृशं तर्हि गौणत्वमङ्गीक्रियत इति चेत् उच्यते । स्वशक्यगुणवत्ता गौणी वृत्तिः । गुणवत्ता च क्वचित् समानजातीयगुणवत्तासम्बन्धेन । क्वचिदारोपेण साक्षादेव । तत्राद्या यथा—सिंहशब्दस्य शक्ये सिंहे विद्यमानैः प्रसह्यकारित्वादिगुणैः समानजातीया गुणा देवदत्ते सन्तीति तत्र गौणत्वम् । ...................... द्वितीया तु यत्र रूपकादौ सत्यपि भेददर्शने सादृश्यमात्रेण सिंहनिष्ठं सिंहत्वक्रूरत्वादि देवदत्ते वक्ता आरोप्य सिंहशब्दं प्रयुङ्क्ते श्रोता तथैव प्रतिपद्यते । तत्रानुभवसिद्धारोपापह्नवे प्रमाणाभावात् स्वशक्यनिष्ठगुणवत्ता गौणी वृत्तिः । अत एव गुणपदं समवेतमात्रपरम् । सिंहत्वादेरप्यारोपाङ्गीकारात् । अत एवालङ्कारिकैः सौन्दर्यस्य तरङ्गिणी ........ सा प्रिया' इत्यादावारोपेणैव गौणी समर्थिता । यद्यपि चेयं काव्यव्यतिरिक्तेषु लोके वेदे वा बहुशो न दृश्यते तथापि काव्येष्वेव सम्भवन्त्या निराकर्तुमशक्यत्वात् वेदेऽपि च 'योषा वाव गौतमाग्निः' इत्यादौ यत्र विधिसम्भवः तत्रारोपस्वीकारादुपन्यस्ता । वार्तिके तु प्राचुर्याभावादेवानुपन्यासः ।"

इति । एवं वार्तिकानुसारिणा पार्थसारथिमिश्रेण शास्त्रदीपिकायां

"तस्मादभिधेयसदृशे वृत्तिर्गौणत्वम् । नाध्यारोपितवचनत्वम्"

इति सिद्धान्ते क्रियमाणे तद्व्याख्यानकारः सोमनाथ इदमाह —

"ननु प्रयोक्तृप्रतिपत्त्रोर्विशेषदर्शने सत्यपि प्रतिमासु देवतारोपवदाहार्यारोपः सम्भवत्येव । सिंहो देवदत्त इतिवत् सिंहो लोष्टमिति प्रयोगाभावेन सादृश्यप्रतीतिरपि शब्दादारोपितार्थत्व (र्थ) प्रतीत्यनन्तरं तदन्यथानुपपत्त्या प्रतिपत्तुरुपपद्यते आरोपितार्थत्वे । एवञ्च ( —ते । आरोपितार्थत्व एव च) "प्रजा वै बर्हिः । यजमानः प्रस्तरः । यजमानमेवायजमानादुत्तरं करोति। तस्माद्यजमानोऽयजमानादुत्तरः" इति "यजमानो वा एककपालः । सुवर्गो लोक आहवनीयः । यदेककपालमाहवनीये जुहोति । यजमानमेव सुवर्गं लोकं गमयति" इत्यादिस्तुतिराञ्जस्येनोपपद्यते । लोकेऽपिच

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः।
अभाललोचनः शम्भुर्भगवान् बादरायणः॥

इत्यादौ बादरायणे ब्रह्मत्वाद्यारोप एव चतुर्वदनत्वादिप्रसिद्धब्रह्माद्येकैकगुणवैकल्यवर्णनं स्वरसं भवति। तथाऽयं राजा साक्षादिन्द्र इत्यादौ साक्षादिति विशेषणं मुख्येन्द्रत्वाद्यारोप एव समञ्जसं भवति। मुख्यगौणयोरेकशब्दोपादानमात्रेणाभेदाध्यवसायमाश्रित्य साक्षादिति विशेषणसमर्थनं त्वत्यन्तक्लिष्टम्। गङ्गायां घोष इत्यादौ मुख्यलाक्षणिकयोरेकशब्दोपादानसम्भ (द्भा)[1]वे ऽप्यभेदाध्यवसायादर्शनात्। तथा मुखं चन्द्र इत्यादौ रूपकमिच्छतामालङ्कारिकाणामप्यारोपितार्थत्वमेव गौणत्वं सम्मतम्। सादृश्यार्थकत्वे तु तुल्यादिशब्दवदुपमैव स्यात्। न तु रूपकम्। न चैवमिदं रजतमिति भ्रान्तप्रतारकवाक्याद् विशेषो न स्यादिति वाच्यम्। प्रतिपत्तुरनाहार्यारोपो भवत्विति बुद्ध्या प्रयोगे प्रतारकवाक्यत्वम्। प्रतिपत्तुराहार्यारोपो भवत्विति बुद्ध्या प्रयोगे गौणत्वमिति विशेषोपपत्तेः। तस्मादारोपितार्थवृत्तित्वमेव गौणत्वं लोकवेदानुगुणमिति चेत् सत्यमेवम्। तथापि वेदे आरोपितार्थत्वस्वीकारे ऽप्रामाण्यापत्तेरयं पक्ष आचार्यैर्दूषितः। यद्यपि रुद्ररोदनादिवदसदर्थेनापि स्तुतिसम्भवान्नाप्रामाण्यप्रसक्तिः तथापि

प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः।
नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे॥

इति न्यायेन वेदे प्रामाण्यविरोधिन आरोपितार्थत्वस्यावकाशो न देय इत्याशयेन तन्निराकरणं कृतमिति ध्येयम्।"

इति। अयमत्र भावः। असन्तमर्थमारोप्यापि वेदेषु व्यवहारो ऽस्तीत्यभ्युप सति अत्राप्यारोपो युक्तः अत्रापीति क्रमेण असदेव स्वर्गादिफलं पुरुषप्रवृत्तिसिद्ध उपन्यस्तमित्येवं प्रतिपाद्य वेदप्रामाण्यमपह्नोतुं य इच्छन्ति तेषामवकाशो द स्यादिति बिभ्यता वार्तिककृता तदनुसारिभिश्च आरोप एव न सम्भवतीत्यात्यन्ति प्रतिषेधः कृतः। न तु परमार्थत एव एवमेतदिति तेषामभिसन्धिरिति। तस्मात

1. श्रीवेङ्कटेश्वरप्राच्यविद्याविमर्शालयतालपत्रकोशे (२९२८) स्थितोऽयं पाठः।

अध्यस्तवस्तुवाच्यैकजीवितं रूपकं श्रुतौ ।
अस्तीति तद्विचारस्य तादर्थ्यं न विहन्यते ॥

उपसंहारः

इत्थं रूपकरूपमुज्ज्वलधियामप्यञ्जसा दुर्ग्रहं
सूत्रन्यायचिरन्तनोक्तिसरणिव्यामर्शतो निश्चितम् ।
श्लाघां वा विबुधैरथान्यदपि वा देवः स्वयं कारयन्
स प्रीतिं जुषतामिहोपकरणीभावात् कृतार्थोऽस्म्यहम् ॥

इति रूपकपरिशुद्धिः ।

त्रिसिन्धुनन्देन्दुविदेशवत्सरे
व्यधायि संलब्धविशुद्धि रूपकम् ।
वृषाद्रिशृङ्गोद्यदुदारचन्द्रमः-
पदारविन्दप्रवणान्तरात्मना ॥



# शोधनिका

| Page | line | |
|---|---|---|
| १३ | १७ | वैयर्थ्यस्यैव |
| १९ | ५ | नोपमा कुतः |
| २१ | १० | निमित्तेन |
| २१ | ११ | प्रदर्श्य |
| २१ | २४ | सङ्कटम् |
| २३ | ६ | उपमारूपकम् |
| ३७ | ६ | दर्शयतो |
| ३९ | ४ | गृहाणां |
| ४० | ६ | घनान्धकार |
| ४० | २३ | पुष्पहासिनी |
| ४६ | ११ | कथमभेद |

# उदाहरणानुक्रमणी



## ग्रन्थानुक्रमणी



## ग्रन्थकारानुक्रमणी



## विषयानुक्रमणी





Printed at Tirumalai-Tirupati Devasthanams Press, Tirupati and published by the Director, Sri Venkateswara Oriental Institute.

## LIST OF SRI VENKATESVARA ORIENTAL INSTITUTE PUBLICATIONS

| | Rs. | A. | P. |
|---|---|---|---|
| *Sri Venkatesvara Oriental Series :—* | | | |
| 1. **Sri Venkatesvara Kavya Kalapa**, Ed. by Sri D. T. Tatacharya ... | 4 | 0 | 0 |
| 2. **History of Tirupati**, Vol. II by Dr. S. Krishnaswami Aiyangar ... | 3 | 0 | 0 |
| 3. **A Glossary of Indian Philosophical Terms**, by Sri C. V. Sankara Rau ... | 1 | 8 | 0 |
| 4. **Psychology** (in Telugu) by Dr. K.C. Varadachari. | 2 | 0 | 0 |
| 5. **Isavasyopanishad Bhashya**, of Venkatanatha Ed. with English Translation by Dr. K. C. Varadachari and Sri D. T. Tatacharya ... | 2 | 0 | 0 |
| 6. **Samurtarchanadhikarana (Atri Samhita)** Ed. by Mr. Raghunatha Chakravarti Bhattacharya and Sri M. Ramakrishna Kavi ... | 8 | 0 | 0 |
| 7. **Suvarnasaptati**, Ed. by Sri N. Aiyaswami Sastri. | 6 | 0 | 0 |
| 8. **Kenopanishad Bhashya** of Rangaramanuja Ed. with English Translation by Dr. K. C. Varadachari and Sri D. T. Tatacharya ... | 2 | 0 | 0 |
| 9. **Tirukkural Kamattuppal** with two old Commentaries Ed. by Sri T. P. Palaniappa Pillai ... | 4 | 0 | 0 |
| 10. **Sri Venkatesvara Vachanamulu**, Ed. by Sri V. Prabhakara Sastri ... | 1 | 8 | 0 |
| *Sri Venkatesvara Oriental Institute Studies :—* | | | |
| 1. **Theory of Knowledge in the Philosophy of Sri Ramanuja** by Dr. K. C. Varadachari ... | 3 | 0 | 0 |
| 2. **Rupakaparisuddhi** by Sri D. T. Tatacharya ... | 2 | 0 | 0 |

*Copies can be had of :—*

THE DIRECTOR,
S. V. ORIENTAL INSTITUTE,
TIRUPATI (CHITTOOR DT.)
SOUTH INDIA.

Printed at Tirumalai-Tirupati Devasthanams Press, Tirupati and published by the Director, Sri Venkatesvara Oriental Institute.